ज्येष्ठो भ्राता गोपस्तं सेनापतिं स्थापयतेति। त कथयन्ति। सिंह न युष्माकं कुलक्रमागतं सेनापत्यं यो गणस्याभिरुचितः स सेनापतिर्भवति। यदि भवतो नाभिरुचितं वयमन्यं सेनापतिं स्थापयाम इति। स संलक्षयति। यद्यस्माकं गृहात् सेनापत्यमन्यत्र गमिष्यति नैतद्युक्तम्। सर्वथा प्रतीच्छामीति। तेनाऽध्यवसितम्। स तैर्महता सत्कारेण सेनापत्ये प्रतिष्ठापितः। वैशालकाः पूर्वं यस्य लेखमनुप्रेषयन्ति तस्य खण्डप्रमुखो गण आज्ञापयतीति लिखन्ति। यदा सिंहः सेनापतिः संवृत्तस्तदा सिंहप्रमुखो गण आज्ञापयतीति। यावदपरेण समयेन यस्मिन्कर्वटके गोपः स्वाधिष्ठितान् कर्मान्तान् कारयति तदा कर्वटकं लेखो गतः। गोपेनोद्घाट्य वाचितः। स कथयति। भवन्तः पूर्वं वैशालको गणः खण्डप्रमुखो गण आज्ञापयतीति लिखन्ति। इदानीं सिंहप्रमुखो गणः आज्ञापयतीति लिखन्ति। किमस्माकं पिता कालगतः। ते कथयन्ति। कालगतः। स संजातामर्षो वैशालीं गत्वा कथयति। भ्रातः युक्तं नाम तव मयि ज्येष्ठतरे तिष्ठति सेनापत्यं कर्तुमिति। सिंहेन तस्य यथावृत्तमारोचितम्। स वैशालकानां लिच्छवीनां संजातामर्षः संलक्षयति। मम वैशालकैरसत्कारः प्रयुक्तो गच्छामि राजगृहमिति। तेन राज्ञो बिम्बिसारस्य दूतप्रेषणं कृतम्। इच्छामि देवस्य बाहुच्छायायां वस्तुम्। तेनास्य लिखितम्। स्वागतम्। आगच्छेति। स राजगृहं गतः। ततो राज्ञा बिम्बिसारेण अग्रामात्ये स्थापितः। यावदपरेण समयेन राज्ञो बिम्बिसारस्याग्रमहिषी कालगता। स

करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। गोपेन स दृष्ट उक्तश्च। देव कस्यार्थाय देवः करे कपोलं दत्त्वा चिन्तापरो व्यवस्थित इति। स कथयति। अग्रमहिषी मे कालगता किमिति न चिन्तापरस्तिष्ठामि। अलं देव त्यज्यतां शोकः। अस्ति मम भ्रातुर्दुहितृद्वयं रूपयौवनसंपन्नं देवार्हमेव। तत्रैका व्याकृता पितृमारकं पुत्रं जनयिष्यतीति द्वितीया तु लक्षणसंपन्नमिति। तत्कतरां देवस्यार्थाय आनयामि। या सा व्याकृता लक्षणसंपन्नं पुत्रं जनयिष्यतीति। ततो गोपेन सिंहस्य लेखोऽनुप्रेषितः। राज्ञो बिंबिसारस्याग्रमहिषी कालगता[1] त्वमुपचेलामिह प्रेषयाग्रमहिषी भविष्यतीति। तेन तस्य प्रतिलेखो विसर्जितः। दूरमपि परमपि गत्वा त्वमेवास्माभिः प्रष्टव्यः। यद्भवता कृतं तत्परं प्रमाणमिति[2]। त्वमेव जानीषे यथा गणेन क्रियाकारः कृतो नान्यत्र कन्या दातव्या ऋते वैशालकानिति। किंतु त्वमागत्योद्याने तिष्ठ अहमेनामुद्यानं निष्काषयिष्यामि। त्वं गृहीत्वा गमिष्यसीति। ततो गोपो राजानमवलोक्य रथमारुह्य वैशालीं संप्रस्थितः। अनुपूर्वेण संप्राप्तः। उद्याने व्यवस्थितः। तेन खलु समयेन वैशाल्यां दौवारिकः कालगतोऽमनुष्यकेषूपपन्नः। तेन वैशालकानां निर्देशितम्। अहममनुष्येषूपपन्नो मम यक्ष-

1 84a, l. to 2: བཙུན་མོ་དམ་པ་ཤི་ནས །

2 84a, l. 3: གར་བསྐོར་ཀྱང་ཁྱོད་ཁོ་ན་ལ་བདག་འདྲི་བར་ཟད་ཀྱི ། ཁྱོད་ཀྱིས་བྱས་པ་གང་ཡིན་པ་དེ་ནི་ཚད་མའི་མཆོག་ཡིན་པས་ཁྱོད་ཉིད་ཤེས །

स्थानं कारयत घण्टां च ग्रीवायां प्रलम्बयत। यदि कश्चिद्वैशालकानां प्रत्यर्थिकः प्रत्यमित्र आगमिष्यति अहं तावद्घण्टाशब्दं करिष्यामि यावद् गृहीतो वा निष्पलायितो वेति। तैर्यक्षः प्रतिरूपं कृत्वा घण्टां च ग्रीवायां बद्ध्वा नृत्यगीतवादित्रशब्देन बलिमाल्योपहारेण द्वारकोष्ठके प्रतिष्ठापितः। गोपेन सिंहस्य संदिष्टम्। अहमुद्याने तिष्ठामि निर्गच्छेति। स वशालकं गणमवलोक्य गृहं गत्वा उपचेलामाह। त्वं राज्ञे बिम्बिसाराय दत्ता। अलंकुरुष्वेत्युक्ता। उद्यानं निर्गच्छ। सा अलङ्कर्तुमारब्धा। चेलया दृष्टा[1]। सा कथयति। किमर्थमलङ्करोषि। अहं दत्ता। कस्मै। राज्ञे बिम्बिसाराय। सा कथयति। अहं ज्येष्ठतरा त्वं कथं दत्ता। यद्येवं त्वमलंकुरु। सा चालंकरोति। घण्टा च रवितुमारब्धा। वैशालको गणः क्षुब्धः प्रत्यमित्रोऽस्माकं वैशालीं प्रविष्ट इति। सिंहः सन्त्रस्त उपचेलेति कृत्वा चेलामादाय लघु लघ्वेव निर्गतः। गोपोऽपि सन्त्रस्तः चेलां रथे आरोप्य संप्रस्थितः। वैशालकैर्दृष्टः। ते तेन सार्धं संग्रामयितुमारब्धाः। स पञ्चसु स्थानेषु कृतावी तेन पञ्च लिच्छविशतानि मर्मणि[2] ताडितानि। स कथयति। भवन्तो मया युष्माकं पञ्चशतानि मर्मणि ताडितान्यवशिष्टं जीवितेनाच्छादयामि निवर्ततेति। ते कथयन्त्येकसत्त्वोप्यस्माकं न प्रघातितः। मुञ्चत सन्नाहम्। तैः सन्नाहो

1 84a-b, l. 4: མཐོང་ནས། Ms. कृष्टा

2 85a, l. 1: གནད་དུ་བསྣུན་ནས།

मुक्तः। पञ्चशतानि भूमौ निपतितानि प्राणैश्च वियुक्तानि। ततस्ते पुरुषराक्षसोऽयमिति कृत्वा भीता निष्पलायिताः। वैशालीमागत्य संजल्पं कर्तुमारब्धाः। एतद्वैरमस्माभिर्भवन्तो बिम्बिसारपुत्राणां निर्यातयितव्यम्। पत्रलेख्यं कृत्वा पेडायां[1] प्रक्षिप्य जतुमुद्रातापं कृत्वा स्थापयतेति। तैस्तथा कृत्वा स्थापितम्। गोपोऽप्यनुपूर्वेण राजगृहमनुप्राप्तः कथयति। उपचेले अवतरेति। सा कथयति। तात नाहमुपचेला। चेलाहं। किं त्वया मम नारोचितम्। सा तूष्णीमवस्थिता। ततोऽसौ दुःखी दुर्मना राज्ञः सकाशं गतः। राज्ञा दृष्ट उक्तश्च। स्वागतं गोप। आगतोऽसि। आगतोऽस्मि देव। आनीता उपचेला। देव आनीता न आनीता च। किं कथयसि। उपचेलेति कृत्वा चेला आनीता। आनीयतां पश्यामः। सा प्रवेशिता। राज्ञा दृष्टा। अतीव रूपयौवनसम्पन्ना हारी स्त्रीविषये। सहदर्शनादेव राजा आक्षिप्तः कथयति। भवन्तो यो हि पुत्रः पितरं घातयति स राज्यहेतोः। यदि मे पुत्रो भविष्यति तस्य जातस्यैवाहं पट्टबन्धं करिष्यामीति। ततस्तेन महता श्रीसमुदयेन परिणीता। विदेहविषयादानीता वैदेहीति संज्ञा संवृत्ता। स तया सार्धं क्रीडति रमते परिचारयति। यावदपरेण समयेन राजा बिम्बिसारो मृगयानिर्गतः। अन्यतमस्मिंश्चाश्रमपदे ऋषिः पञ्चाभिज्ञः प्रतिवसति। यावन्मृगः शरपरम्परया सन्त्रासितस्तस्य ऋषेरा-

1 Tib. སྒྲོམ་བུ།

श्रमपदान्निर्गतो राज्ञा शरेण मर्मणि ताडितः। ततोऽसौ ऋषिः क्रुद्धः कथयति। कलिराज मम चण्डमृगोऽप्याश्रमपदं परिहरति। त्वया तु शरणोपगतो मृगः प्रघातित इति। स च राजैवमृषिणा परिभाष्यते। बलकायश्चागतः कथयति। देव कोऽयं परिभाषते। राजा कथयति। अहं भवन्तः। यो राजानं परिभाषते तस्य को दण्डो देव। तस्य बधो दण्डः। यद्येवं परित्यक्तो मे अयमृषिः[1]। स प्रघातितुमारब्धः। स प्रघात्यमानो मिथ्या प्रणिधानं करोति। यदहमनेन कलिराजेन अदूषणमकारि बध्यः। उत्सृष्टस्तत्रोपपद्येयं यत्रैनं जीविताद् व्यपरोपयेयम्। पुनः संलक्षयति। राजान एते सुगुप्ताः सुगोपिताः। यद्यहमन्यत्रोपपत्तिं ग्रहिष्यामीति कदाचित्प्रत्ययं नारागयिष्यामि। सर्वथा अनेन मे प्रणिधानेन अस्यैवाग्रमहिष्याः कुक्षावुपपत्तिः स्यादिति। स मिथ्या प्रणिधानं कृत्वा चेलायाः कुक्षावुपपन्नः। यमेव दिवसं प्रतिसन्धिगृहीतस्तमेव दिवसं रुधिरवर्षं पतितम्। चेलायाश्च दोहदः समुत्पन्नः। अहो बताहं देवस्य पृष्ठमांसान्युत्पाट्योत्पाट्य भक्षयेयमिति[2]। एष च वृत्तान्तो राज्ञे निवेदितः। राज्ञा नैमित्तिका आहूय पृष्टाः। ते ऊचुः। देव योऽयं सत्त्वो देव्याः कुक्षिमवक्रान्तस्तस्यायमनुभाव इति।

1 86a, l. 3: གལ་ཏེ་དེ་ལྟར་ན་ངས་དྲང་སྲོང་དེ་ཡོངས་སུ་སྤངས་སོ།

2 Ms. वत्रारायु Tib. 86a, l. 7: ལྷའི་རྒྱབ་ཀྱི་ཤ་བཅད་ཅིང་བཅད་ཅིང་ཟོས་ཀྱང་ཅི་མ་རུང་སྙམ་མོ།

राजा चिन्तापरो व्यवस्थितः। कथमस्या दोहदः प्रतिविनोद्यत इति। अपरैः कुशलजातीयैः समाख्यातम्। देव तूलिकायां[1] मांसपूर्णां प्रावृतिं देव्या आत्मानमुपनय इति[2]। ततो राज्ञा मांसपूर्णया तूलिकया आत्मानं वेष्टयित्वा चेलाया उपनामितम्। तया पृष्ठमांसमिति कृत्वा भक्षितम्। ततस्तस्या यो दोहदः स प्रतिविगतः। भूयोऽप्यस्या दोहद उत्पन्नः। अहो बताहं देवस्य रुधिरं पिबेयमिति। एतदपि राज्ञे निवेदितम्। ततो राज्ञा पञ्चेङ्गिकाः शिरा मोचयित्वा रुधिरं पायिता। सोऽप्यस्या दोहदः प्रतिविगतः। यावत्परिपूर्णैर्नवभिर्मासैः प्रसूता। दारको जातोऽभिरूपो दर्शनीयः प्रासादिकः। यस्मिन्नपि दिवसे जातस्तस्मिन्नपि रुधिरवर्षं पतितम्। भूयो राज्ञा नैमित्तिका आहूय पृष्टास्ते कथयन्ति। देव यथा शास्त्रे दृश्यते नियतमयं दारकः पितरं जीविताद् व्यपरोप्य स्वयमेव पट्टं बद्ध्वा राज्यं कारयिष्यतीति। राजा संलक्षयति। सर्वथा राज्यार्थमयं मां जीविताद्व्यपरोपयति। तदस्मै स्वयमेव राज्यं दास्यामि। किमर्थं मां जीविताद्व्यपरोपयिष्यतीति।

तेन खलु समयेन वैशाल्यां महानामो लिच्छविः प्रतिवसति। तस्योद्याने आम्रवनम्। तस्मिन्नप्यकस्मादेव[3] कदली-

1 Ms. कुलिकायां

2 86b, l. 3: ལྷ་རས་ཀྱི་བར་ཤུང་བལྟམ་པར་བགྱིས་དེ། གཡོག་ལ་ཉེད་བཙུན་མོ་ལ་སྟོངས་མཛོད་ཅིག།

3 87a, l. 3: གློ་བུར།

स्कन्धो जातः। आरामिकेण च दृष्टः। तत्समनन्तरमेव पुष्पितः। तेन विस्मयजातेन महानामाय निवेदितम्। तेन नैमित्तिका आहूय पृष्टाः। ते कथयन्ति। देव प्रतिपाल्यताम्। सप्तमे दिवसे स्फुटिष्यति। तन्मध्याद्दारिका भविष्यति। श्रुत्वा महानामो गृहपतिर्भूयस्या मात्रया विस्मयमापन्नस्तस्मिंश्चोद्याने आरक्षकान्पुरुषान्समन्ततः स्थापयित्वा दिवसान् गणयितुमारब्धः। यावत्सप्तमे दिवसे तस्मिन्नुद्याने अपगतपाषाणशर्करकठल्लं व्यवस्थापिते चन्दनवारिपरिषिक्ते सुरभिधूपघण्टिकोपनिबद्धे आमुक्तपट्टदामकलापे पुष्पावकीर्णे अनेकगीतवादित्रनिनादिते सुहृत्संबन्धिबान्धवजनपरिवृतो महता श्रीसमुदयेन अन्तःपुरसहितो[1] निर्गतस्तस्य तस्मिंश्चोद्याने क्रीडतो रममाणस्य परिचारयतः कदलीस्तम्भः स्फुटितः। दारिका जाताभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता। ततो महानामस्याग्रमहिष्याः संन्यस्तः। सा कथयति। देवास्य नामधेयं व्यवस्थाप्यते। महानामः कथयति। इयं दारिकाऽम्रवनाल्लब्धा। भवत्वस्याऽम्रपाली नामेति। यावन्महानामो गृहपतिरुद्यानात्स्वगृहं गत आम्रपाली दारिका उन्नीयते वर्धते पूर्ववद्यावन्महती संवृत्ता। तस्या वरा आगच्छन्ति क्रौञ्चाः[2] शाक्याश्चान्ये नानादेशनिवासिनो राजपुत्राः। अमात्यपुत्राः। धनिनः। श्रेष्ठिनः। सार्थवाहाः। महानामो गृहपतिः

1 Ms. सहीयो 87b, l. 2: ཆུང་མ་དང་ལྷན་ཅིག་བྱུང་ནས །

2 87b, l. 6: དེ་སློང་བའི་ཕྱིར་ཡུལ་ཀུང་ཀུང་པ་རྣམས་དང། ཤཱ་ཀྱ་རྣམས་དང།

संलक्षयति। यस्यैव न दास्यामि तस्यैव द्विड्[1] भविष्यामि। अपि तु गणेन क्रियाकारः कृतः। गणं तावदवलोकयिष्यामीति। तेन वैशालको गणः संनिपातितः। शृण्वन्तु भवन्तो ब्राह्मणा गृहपतयो ममोद्याने दारिका उत्पन्ना। सा मया आपायिता पोषिता संवर्धिता। तामहं स्वकुलवंशप्रतिरूपकस्य कस्यचिद्भार्यार्थमनुप्रयच्छामि। गण अवलोकितो भवत्विति। ते कथयन्ति। गृहपते गणेन पूर्वमेव क्रियाकारः कृतः कन्या अनिर्वाहा स्त्रीरत्नं गणभोग्यमिति। तदानीयतां तावदसौ। दारिकां पश्यामः कीदृशीति। सा तेन गणमध्यं नीता। तां रूपयौवनसंपन्नां दृष्ट्वा सर्व एव गणो विस्मयोत्फुल्लदृष्टिः समन्ततो निरीक्षितुमारब्धः कथयति च। गृहपते स्त्रीरत्नमेतद्गणभोग्यं न कस्यचिद्देयमिति। ततो महानामो गृहपतिर्दुर्मनाः स्वगृहं गतः। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। आम्रपाल्या दृष्टः पृष्टश्च। तात किमसि चिन्तापरः। पुत्रि त्वं स्त्रीरत्नमिति कृत्वा गणभोग्या संवृत्ता। मम मनोरथो न परिपूर्णः। तात किं त्वं पराधीनः। पुत्रि गणेन पूर्वमेव क्रियाकारः कृतः स्त्रीरत्नं गणभोग्यमिति। त्वं च स्त्रीरत्नमतोऽहमनीश्वर इति। सा कथयति। [2]समयतोऽहं गणभोग्या भवामि यदि मे गणः

1 Ms. द्विषो

2 88b, l. 2 : དམ་ཞིག་བཅས་ཏེ (=if promise made) གལ་ཏེ་ བདག་ལ་ ཚོགས་ཀྱིས་དམ་པ་ལྷ་ཞིག་སྩལ་ན། བདག་གིས་ཚོགས་ཀྱིས་སྤྱོད་པར་བགྱི་སྟེ།

पंच वराननुप्रयच्छति। प्रथमे स्कन्धे गृहं ददाति। एकस्मिन् प्रविष्टे द्वितीयो न प्रविशति। यश्च प्रविशति स पंचकार्षापण-शतान्यादाय। यदा गृहविचयो भवति तदा मम गृहं सप्तमे दिवसे प्रत्यवेक्ष्यते[1]। निष्कासः प्रवेशश्च मद्गृहं प्रवेक्ष्यतां न विचार्यत[2] इति। महानामेन[3] गणस्याम्रपालीसन्देशो निवेदितः। गणः कथयत्येवं भवतु। यत् कथयति प्रथमे स्कन्धे गृह-मिति। स्त्रीरत्नमसावर्हत्येव प्रथमे स्कन्धे गृहम्। यत् कथयत्ये-कस्मिन्प्रविष्टे द्वितीयेन न प्रवेष्टव्यमिति। एतदपि युक्तम्। प्रति-क्रुष्टमेतद्वैराणां यदुत स्त्रीवैरम्। यद्येकस्मिन्प्रविष्टे द्वितीयः प्रविशति नियतमन्योन्यविप्रघातिको भविष्यति। यत् कथयति यः प्रविशति तेन पंचकार्षापणशतान्यादाय प्रवेष्टव्यमिति। एतदपि युक्तम। अवश्यं तस्या वस्त्रालङ्कारेण प्रयोजनम्। यत् कथयति सप्तमे दिवसे गृहविचयः कर्तव्य[4] इत्येतदपि युक्तम्। पूर्वं वा क्रियेत पश्चाद्वा कोऽत्र विरोधः। यत् कथयति निष्कासः प्रवेशो[वा] मनुष्याणां न विचारणीय इत्येतदपि युक्तम्। वेश्यासौ। यदि पुरुषाणां निष्कासः प्रवेशो [वा] विचार्यते कस्तस्या गृहं प्रवेक्ष्यति। ततो गणेन तस्याः पञ्च वरा दत्ताः। गणभोग्या संवृत्ता। वैशालका लिच्छवयस्तस्या गृहं प्रवेष्टुमारब्धाः परिचारयितुम्।

1 88b, l. 4: གང་གི་ཚེ་ཁྱིམ་ཉུལ་བ་དེའི་ཚེ། བདག་གི་ཁྱིམ་ཞག་བདུན་ན་བྱུལ་བ་དང་།

2 Ms. न क्रियत

3 Ms. महानाम्ना

4 89a, l. 2: ཞག་བདུན་ལོན་ན། ཁང་པ་བྱུལ་བར་བྱའོ་ཞེས་སྨྲས་པ།

तत्र केषांचिदुत्तप्तविटत्वात्सहदर्शनादेव रागो विगच्छति[1]। केषांचित्स्पर्शनादेव। कश्चित्तया पुरुषकार्यं करोति। सा संलक्षयति। अपुमांस एते। उपायसंविधानं कर्तव्यमिति। तया नानादेशनिवासिनश्चित्रकरा आहूय उक्ताः। भवन्तो येन यादृशो राजा वा राजमात्रो वा धनी वा श्रेष्ठी वा वणिक् वा सार्थवाहो वा दृष्टः स तत्तादृशं भित्तौ लिखत्विति। तैर्यथा दृष्टा लिखिताः। तत आम्रपाली नानालंकारविभूषिता चित्रकर्म प्रत्यवेक्षते पृच्छति च। अयं भवन्तः कतरः। अयं राजा प्रद्योतः। अयमपरः कः। राजा प्रसेनजित्कोशलः। अयमपरः कः। उदयनो वत्सराजः। अयमपरः कः। राजा मागधः श्रेण्यो बिम्बिसारः। एवं सर्वे तया पृष्टास्तैरपि सर्वैः समाख्याताः। ततस्तया सर्वान् प्रत्यवेक्ष्य बिम्बिसारे दृष्टिर्निपातिता। सा संलक्षयति। यादृशोऽस्य पुरुषस्यारोहपरिणाहः शक्ष्यत्येष मया सार्धं परिचारयितुमिति। यावदपरेण समयेन राजा मागधः श्रेण्यो बिम्बिसार उपरि प्रासादतलगतोऽमात्यगणपरिवृतः सत्कथया तिष्ठति। भवन्तः केन कीदृशी वेश्या दृष्टा। गोपः कथयति। देव तिष्ठन्तु तावदन्याः। वैशाल्यामाम्रपाली नाम वेश्या अतीव रूपयौवनसंपन्ना चतुःषष्टिकलाभिज्ञा देवस्यैवोपभोग्या। स कथयति। गोप यद्येवं गच्छामो वैशालीं तया सार्धं परिचारयामः।

1 89a, l. 5: དེ་ན་ཁ་ཅིག་ནི་ཕྲུལ་ལ་ཆགས་ཆེས་པའི་ཕྱིར། མཐོང་མ་ཐག་ཁོ་ནར་འདོད་ཆགས་དང་བྲལ་བར་གྱུར་ཏེ།

स कथयति । देवस्य वैशालका लिच्छवयो दीर्घरात्रं बाधकाः प्रत्यर्थिनः प्रत्यमित्राः। मा ते अनर्थं करिष्यन्ति । राजा कथयति । भवति खलु पुरुषाणां पुरुषसाहसम् । गच्छामः । स कथयति । यदि देवस्यावश्यनिर्बन्धो गच्छामः । स रथमभिरुह्य गोपेन सार्धं वैशालीं सम्प्रस्थितोऽनुपूर्वेण वैशालीं गतः। गोप उद्याने स्थितः । राजा आम्रपाल्या गृहं प्रविष्टः । यावद् घण्टा रटितुमारब्धा । वैशालकाः क्षुब्धाः । भवन्तः कोप्यस्माकममित्रकः प्रविष्टः । घण्टा रटतीति । उच्चशब्दो महाशब्दो जातः । राजा बिम्बिसार आम्रपालीं पृच्छति । भद्रे किमेतत् । देव गृहविचयः[1] क्रियते । कस्यार्थाय । देवस्य प्रतिपत्तव्यम्[2] । किं निष्पलाये । देव मा काहलो[3] भव । सप्तमे दिवसे मम गृहविचय आपद्यते । सप्ताहं तावत् क्रीड रमस्व परिचारय सप्ताहस्यात्ययात् कालज्ञा भविष्यामीति । स तया सार्धं क्रीडति रमते परिचारयति यावदाम्रपाली आपन्नसत्त्वा संवृत्ता । तदा बिम्बिसाराय निवेदितम् । देव आपन्नसत्त्वास्मि संवृत्तेति । तेन तस्या विरली[4] अङ्गुलिमुद्रा च दत्ता । उक्ता च । यदि दारिका भवति तवैव । अथ दारकः । एतां विरलीं प्रावृत्य

1 90b, l. 1: ཁྱིམ་པར་ཉུལ་བར=house-searching

2 90b, l. 1: ལྷའི་སླད་དུའོ=on account of the lord.

3 90b, l. 1: ལྷ་མི་དགྱེས་པར་མ་མཛད་ཅིག །=do not be dejected.

4 90b, l. 4: སིང་རས=विरलिका=thin cloth.

अंगुलिमुद्रां च ग्रीवायां बद्धा मत्सकाशं प्रेषयसि। [स] च निर्गत्य गोपेन सार्धं रथमभिरुह्य संप्रस्थितः। घण्टा तूष्णीमवस्थिता। ते कथयन्ति। भवन्तोऽमित्रको निर्गतः समन्वेषयाम इति। पञ्च लिच्छविशतानि बद्धगोधाङ्गुलित्राणानि[1] राज्ञो बिम्बिसारस्य पृष्ठतः समनुबद्धानि। गोपेन दृष्टानि। स कथयति। देव वैशालिका लिच्छवय आगताः। किमेभिः सार्धं देवो युध्यते। आहोस्वित् रथं वाहयसीति। स कथयति। अहं श्रान्तको रथं वाहयामि। त्वमेव एभिः सार्धं युध्यस्वेति। स तैः सार्धं योद्धुमारब्धः। वैशालकैः प्रत्यभिज्ञातः। ते कथयन्ति। भवन्तः स एवायं पुरुष-राक्षसो निवर्तामह इति। ते प्रतिनिवृत्ता वैशालीं गताः संनिपत्य पुनः क्रियाकारं कृताः। भवन्त एतदपि वैरमस्माभि-र्बिम्बिसारपुत्राणां निर्यातयितव्यमिति।

यावन्नवानां मासानामत्ययादाम्रपाली प्रसूता। दारको जातः। अभिरूपो दर्शनीयः प्रासादिको यावदुन्नीतश्चरितो महान्संवृत्तः। स वैशालकैर्लिच्छविदारकैः सार्धं क्रीडंस्तैरप्रियमुक्तः। भवन्तोऽस्य दासीपुत्रस्य कः पिता। अनेकशतसहस्रनिर्जातोऽयमिति[2]। स प्ररुदन्मातुः सकाशमुपसंक्रान्तस्तयोच्यते। पुत्र किमर्थं रोदिषीति। तेन सर्वं विस्तरेण समाख्यातम्। सा कथयति। पुत्र यदि भूयः पृच्छन्ति वक्तव्यास्तादृशो मम पिता यो युष्माकमेकस्यापि नास्तीति। यदि कथयन्ति। कतर इति। वक्तव्या राजा बिम्बिसार

1 90b, l. 7: ལི་ཙ་བྱི་སྟོན་འཁོར་གྱི་མདའ་རྩིབས་ཅན་ལྔ་བརྒྱས།

2 91a, l. 7: བྲན་མོའི་ཁྱེའུ་ཁྱོད་བརྒྱ་སྟོང་ཕྲག་དུ་མ་ཞིག་ལས་ནི་སྐྱེས་ན།

इति । यावत्स तैः सार्धं भूयः क्रीडितुमारब्धः स तैस्तथैवोक्तः । स कथयति। तादृशो मे पिता यो युष्माकमेकस्यापि नास्ति। कतरः। राजा बिम्बिसारः । ते भूयस्या मात्रया ताडयितुमारब्धाः । भवन्तो योऽस्माकं शत्रुः सोऽस्य पितेति । तेन रुदता यथावृत्तं मातुराख्यातम् । सा संलक्षयति । वैशालका लिच्छवयो व्याडा विक्रान्ताः । स्थानमेतद्विद्यते यदेनं प्रतिघातयिष्यन्ति । सा चैवं चिन्तापरा । संबहुलाश्च वणिजः पण्यमादाय राजगृहं संप्रस्थिताः । तया त उपलब्धा उक्ताश्च अनेनाङ्गुलिमुद्रकेण भाण्डं मुद्रयित्वा गच्छत । अशुल्का गमिष्यथ । एतं च दारकं राजगृहं नयत । एतदङ्गुलिमुद्रकं ग्रीवायां बद्धा राजकुलद्वारे स्थापयिष्यथ । तैः प्रतिज्ञातम् । एवं भवत्विति । पुत्रोऽपि मुक्ताहारं दत्त्वाऽभिहितः[1] । पुत्र त्वया राज्ञोऽर्थाधिकरणे निषण्णस्य मुक्ताहारं पादयोः स्थापयित्वाभिरुह्योत्सङ्गे निषत्तव्यम् । यदि कश्चित्कथयति नायं दारको बिभेतीति । स वक्तव्यः । अस्ति कश्चित्पुत्रः पितुर्बिभेतीति । स वणिग्भिः सार्धमनुपूर्वेण राजगृहं गतः । तैः स्नपयित्वाङ्गुलिमुद्रकेणालंकृत्य[2] राजद्वारे स्थापितः । स येन राजा तेनोपसंक्रान्तः । उपसंक्रम्य मुक्ताहारं पादयोः स्थापयित्वोत्सङ्गमभिनिषण्णः । राजा कथयति । भवन्तो नायं दारको बिभेतीति । स कथयति । तात अस्ति कश्चित्पुत्रः पितुर्बिभेति । ततो राज्ञाभयशब्देन समुदाचरित इति । अभयो राजकुमारोऽभयो राजकुमार इति संज्ञा संवृत्ता[3] ।

1 92a, l. 1 : སྨྲས་པ །

2 Ms. मुद्रया केनालंक्तक्क

3 In Tib., a section ends here. འདུལ་བ་གཞི । བམ་པོ་དྲུག་ཅུ་གཅིག་པ །

राजा बिम्बिसारोऽतीव परदाराभिरतः। उपैति हस्तिस्कन्धाभिरूढो नगरे रथ्याः। आलोलेक्षणोऽन्वाहिण्डते। तेन खलु समयेन राजगृहेऽन्यतरः श्रेष्ठी आढ्यो महाधनो महाभोगी। तेन सदृशात्कुलात्कलत्रमानीतम्। पूर्ववत्परिचारयति। सोऽपरेण समयेन पत्नीमामन्त्रयते। भद्रे गच्छामि पण्यमादाय देशान्तरमिति। सा कथयत्यार्यपुत्र एवं कुरुष्वेति। स पण्यमादाय देशान्तरं गतः। [1]सोपसृष्टाम्बरवसना क्लेशैर्बाधितुमारब्धा। राजा बिम्बिसारो हस्तिस्कन्धाभिरूढस्तस्या गृहसमीपेन गच्छति। तया च वातायनस्थया राज्ञः स्रग्दामं क्षिप्तम्। ततो राज्ञा दृष्टा उक्ता च। आगच्छेति। सा कथयति। देव जिह्रेमि। त्वमेव प्रविशेति। ततो राजा प्रविष्टः। स तया सार्धं परिचारयति। सा तस्मिन्समये कल्याणी ऋतुमती आपन्नसत्त्वा संवृत्ता। तया राज्ञे निवेदितम्। देव आपन्नसत्त्वास्मि संवृत्ता। ततो राज्ञा तस्यापि अङ्गुलिमुद्रकञ्चिवा च[2] विरली दत्ता। उक्ता च। यदि तावद्दारको भवति। एतां विरलिकां प्रावृत्य अङ्गुलिमुद्रकं च ग्रीवायां बद्ध्वा मम प्रेषयिष्यसि। अथ दारिका तवैवेत्युक्ता। राजा प्रक्रान्तः। यावदसौ सार्थवाहः संपन्नार्थो राजगृहसमीपमागतः। तेन पत्न्यादि संदिष्टं भद्रे प्रामोद्यमुत्पादय। स्वस्तितः संपन्नार्थोऽहमागतः। कियत्तमैर्दिवसै-

1 92b, l. 3: དེ་ཡང་ཁ་ཟས་ཞིམ་པོ་དང །

2 92b, l. 7: སྣེང་རས་ཁྲ་བོ །=painted cloth.

रागत एवेति। सा श्रुत्वा कथिता। मया एवं रूपमकृत्यं कृतं स चागतः। कथमत्र प्रतिपत्तव्यमिति। तया एष वृत्तान्तो राज्ञे निवेदितः। ततो राज्ञा प्रतिदेशो दत्तः। निर्विशंका तिष्ठ। अहं तथा करिष्ये यथा न शीघ्रमागमिष्यतीति। राज्ञा तस्य दूतोऽनुप्रेषितः। सार्थवाह ममामुकेनामुकेन च रत्नेन प्रयोजनम्। तेन विना त्वया इह न प्रवेष्टव्यमिति। स तेषां रत्नानामर्थाय दूरतरं प्रविष्टः। सापि नवानां मासानामत्ययात्प्रसूता। दारको जातः। अभिरूपो जातः प्रासादिकः। अशिक्षितपण्डितो मातृग्रामः। तया पेडायां प्रक्षिप्य घृतस्य मधुनश्चाप्यं[1] पूरयित्वा अंगुलिमुद्रकं ग्रीवायां बद्ध्वा विरलिकया प्रच्छाद्य प्रेष्यदारिका अभिहिता। गच्छ त्वमेतां पेडां राजकुलद्वारं नीत्वा मण्डलकं कृत्वा प्रदीपं प्रज्वाल्य एकान्ते तिष्ठ यावत्केनचिद् गृहीत इति। तया यथाकृतं यावद्राजा उपरि प्रासादतलगतो अभयेन राजकुमारेण सार्धं तिष्ठति। तेन राजकुलद्वारे प्रदीपो दृष्टः। ततः पौरुषेयाणामाज्ञा दत्ता। पश्यत भवन्तः किमेष राजकुलद्वारे प्रदीपो ज्वलतीति। तैर्दृष्ट्वा निवेदितम्। देव पेडा तिष्ठतीति। स कथयत्यानय इति। अभयेन च राजकुमारेणाभिहितम्। देव यदत्र पेडायां तन्मम दातुमर्हसीति। राज्ञा प्रत्यभिज्ञात एवमस्त्विति। यावद्राज्ञा पेडा उपनामिता। राजा कथयत्युद्घाटयत। उद्घाटिता यावद् दारकः। राजा कथ-

1 93a, l. 7: དས་མར་དང་སྦྲང་རྩིས་དེ་འདྲངས་པར་བསྐྱེད་ནས །

यति। किमयं जीवत्याहोस्विन्मृत इति। तैः समाख्यातं जीवतीति। ततो राज्ञा अङ्गुलिमुद्रकं विरलिकां च प्रत्यभिज्ञाय अभयाय स राजकुमाराय दत्तः। स तेनापायितः पोषितः संवर्धितः। राज्ञा जीवकवादेन समुदाचरितोऽभयेन च राजकुमारेण भृत इति जीवकः कुमारभृतो जीवकः कुमारभृत इति संज्ञा संवृत्ता। यावदपरेण समयेन जीवकः कुमारभृतो महान्संवृत्तः। सोऽभयेन सार्धं संगणिकया तिष्ठति। अजातशत्रुः कुमारोऽज्ञात एव राजत्वे व्याकृतः। वयमपि किञ्चिच्छिल्पं शिक्षामहे[1] यदस्माकमुत्तरकालं जीविका भविष्यतीति। तौ चैवं मन्त्रयितौ। रथकारश्च शुक्लवासाः शुक्लवासोभिः पुरुषैः परिवृतो राजकुलं प्रविशति। सोऽभयेन राजकुमारेण दृष्टस्तेनान्ये च राजपुरुषाः पृष्टाः क एष इति। ते च कथयन्ति रथकारः। किमेष लभते। वृत्तिम्। [स] संलक्षयति। अहमपि रथकारत्वं शिक्षे। देवमवलोकयामीति। स राज्ञः सकाशमुपसंक्रम्य कथयति। देव अहमपि रथकारत्वं शिक्षे इति। राजा कथयति। पुत्र किं तवैषा जीविका भविष्यतीति। तात राजपुत्रेण सर्वशिल्पानि शिक्षितव्यानि। पुत्र यद्येवं शिक्षस्व। रथकारत्वं स शिक्षयितुमारब्धः। जीवकेनापि वैद्यो दृष्टः शुक्लवासाः शुक्लवासोभिः पुरुषैः परिवृतो राजकुलं प्रविशन्। तेनापरे च पृष्टाः क एष इति। तैः समाख्यातम्। वैद्यः। किमयं करोति। चिकित्साम्। यद्यातुरो जीवत्यभिसारं[2] लभते।

1 Ms. शिक्षाम

2 94b, l. 2: རྔན་པ། =fee

अथ प्रेतो न मार्ग्यो न पृच्छ्यः[1] । स संलक्षयति । वैद्यकं शिक्षेय इति । स पितुः सकाशमुपसंक्रम्य कथयति । देव अनुजानीहि वैद्यकं शिक्षे[2] इति । राजपुत्रस्त्वं किं वैद्यकत्वेन करोषि । देव राजपुत्रेण सर्वशिल्पानि शिक्षितव्यानि । पुत्र यद्येवं शिक्षस्व । स वैद्यकं शिक्षयितुमारब्धः । तेन वैद्यकं शिक्षितम् । स कपालीमोचनीं तु विद्यां न जानाति । तेन श्रुतं तक्षशिलाया-मात्रेयो नाम वैद्यराजः । स कपालमोचनीं विद्यां जानीते इति । स राज्ञः सकाशमुपसंक्रम्य कथयति । देव गच्छामि तक्षशिलाम् । किमर्थम् । तत्रात्रेयो नाम वैद्यराजः । स कपालमोचनीं विद्यां जानीते । तां ग्रहीष्यामि । पुत्र किं नु तवैषा जीविका । देव वैद्यकोऽथवा न शिक्षितव्यः । अथवा शिक्षितः कर्तव्यः[3] । पुत्र यद्येवं गच्छ । तेन राज्ञे पुष्करसारिणे संदिष्टम् । एष मम पुत्रो वैद्यकं शिक्षितुमात्रेयस्य सकाशं गच्छत्यस्य सर्वयोगोद्वहनं कर्तव्यमिति । सोऽनुपूर्वेण तक्षशिलामनुप्राप्तः । पुष्करसारिणा च लेखं वाचयित्वा आत्रेयस्य समर्पितः । एष राजपुत्रस्त्वत्सकाशमुपेत्यागतो वैद्यकमेनं शिक्षयस्वेति । आत्रेयस्तस्योपदेशं करोति । सोऽल्पतरमुपदिशति जीवकः सविशेषं गृह्णात्याचरति । आत्रेयस्य यदा ग्लानावलोकको गच्छति तदा एकमादाय गच्छति । सोऽपरेण समयेन जीवक-

1 94b, l. 3: འོན་ཏེ་གཤམ་ན་མི་ཚོལ་མི་འདྲིའོ། Ms. अथ प्रत्नमार्ग न प्रच्छः इति ।

2 Ms. शिक्षेदिति

3 95a, l. 1-2: ལྷ་ཡང་ན་ནི་སྨན་དཔྱད་མི་བསླབ། ཡང་ན་ནི་ལེགས་པར་བསླབ་པར་བགྱིའོ།

मादाय गतः। तेनातुरस्य भैषज्यं व्युपदिष्टम्। इदं चेदं च दास्यथ। इत्युक्त्वा निष्क्रान्तः। जीवकः संलक्षयति। क्षीणोऽयमुपाध्यायः।[1] यद्येष एतद्भैषज्यमुपयुंक्ते अद्यैव कालं करोति। न शोभनमुपाध्यायेन व्युपदिष्टम्। उपायसंविधानं कर्तव्यमिति। स आत्रेयेण सार्धं निष्क्रम्य पुनः प्रविष्टः। कथयति। उपाध्याय एवमाह। यन्मया भैषज्यं व्युपदिष्टं तन्न देयमिदं चेदं च देयमिति। तैस्तथैव कृतम्। स्वस्थीभूतः। यावदपरस्मिन्दिवसे पुनरप्यात्रेयस्तस्य सकाशं गतः। पृच्छति का वार्ता। स्वस्थीभूतः। एवं पुनरप्येतदेव देयम्। तत् किं यत्पूर्वमादिष्टम् आहोस्वित्पश्चात्। किं मया पूर्वमादिष्टं किं वा पश्चात्। तैः समाख्यातमिदं त्वया साक्षाद् व्युपदिष्टं इदं जीवकेन संदिष्टमिति। स संलक्षयति। हम्[2] जीवकः प्राज्ञ इति विदित्वा कथयति यद् जीवकेन व्युपदिष्टं तद्दातव्यमिति। जीवकस्यान्तिके अनुनय[3] उत्पन्नः। स यत्र गच्छति तत्र जीवकमादाय। तेऽन्ये माणवकाः कथयन्त्युपाध्याय त्वमस्य राजपुत्र इति कृत्वा यत्नतो व्यपदेशं करोष्यस्माकं न करोषीति। स कथयति। जीवकः प्राज्ञः। अल्पं व्यपदिशामि तत् स्वशक्त्या विभजति। यूयं तु न तथेति[4]। ते कथयन्ति उपाध्याय कथं ज्ञायते। यद्येवाहं भवतां प्रत्यक्षीकरोमि। तेन ते माणवकाः सर्वे वीथीं प्रेषिता-स्त्वयाऽमुकस्य द्रव्यस्य मूल्यं प्रष्टव्यं त्वयाऽमुकस्येति। जीवकोऽपि

1 95a, l. 7: འདི་ནི་མཁན་པོས་ཉེས་ཏེ།

2 95b, l. 5: བདག་གི་ཉེས་ཀྱི་འཚོ་བྱེད་ནི་ཤེས་རབ་ཅན་ཡིན།

3 Ms. अनुनयत

4 Ms. भषीति 96a, l. 1: ཁྱོད་ཀྱིས་ནི་དེ་ལྟ་མ་ཡིན་ནོ།

संदिष्टस्त्वयाप्यमुकस्येति । तैर्माणवकैर्यथासंदिष्टमेवानुष्ठितम् । जीवको यथासंदिष्टं कृत्वा संलक्षयति । यद्युपाध्यायोऽन्यस्य द्रव्यस्य मूल्यं प्रक्ष्यति किं मया वक्तव्यम् । सर्वथा सर्वद्रव्याणां मूल्यं पृच्छामीति । ते सर्वे उपाध्यायसकाशमागत्य यथासंदिष्टं निवेदितवन्तः । आत्रेयोऽसंदिष्टस्य द्रव्यस्य मूल्यं प्रष्टुमारब्धः । माणवक अमुकस्य द्रव्यस्य किं मूल्यमिति । स कथयति । न जाने । अपरे पृष्टाः । कथयन्ति न जानीमह इति । जीवकः पृष्टः । तेन सर्वद्रव्याणां मूल्यं समाख्यातम् । आत्रेयः कथयति । माणवकाः श्रुतं वः । श्रुतम् । इत्यर्थमहं कथयामीति जीवकः प्राज्ञोऽहमल्पं व्यपदिशाम्ययं स्वशक्त्या विभजतीति । भूयोऽपि प्रत्यक्षीकरिष्यामि । ते तेनोक्ता गच्छत सरलकं[1] पर्वतमभैषज्यमानयतेति । ते गतास्तेषां यद्यद्भैषज्यमभिरुचितं तत्तेन गृहीतम् । जीवकः संलक्षयति । नास्ति किंचिद्भैषज्यमिति । तेन शरमूलं पाषाणवर्तिका च गृहीता । यावज्जीवकेनाऽर्धपथे गोपांगना दृष्टा दधिघटकिटालपिण्डं[2] चादायात्रेयसकाशं संप्रस्थिताऽतीवाक्षिरोगार्ता । सा तेन पृष्टा । क्व गच्छसीति । तया समाख्यातम् । तेन तस्यास्तस्मिन्नेव स्थाने संनिहितभैषज्यं व्युपदिष्टम् । तया कृतम् । सद्यः स्वस्थीभूता साऽभिप्रसन्ना कथयति । अयं ते दधिघटः किटालपिण्डकश्चेति । तेन किटालपिण्डको गृहीतो दधिघटस्तु तस्या एव दत्तः । स

1 96b, l. 1: སྤང་ཤིང་ཅན་གྱི་རི་ལ །

2 96b, l. 4: སྨུམ་ཚུད་ཁྲིར་ནས །

किटालपिण्डमादाय संप्रस्थितः। यावत्तैर्माणवकैरन्तर्मार्गे हस्तिपदं दृष्टम्। ते तं निरीक्षितुमारब्धाः। जीवकश्चागतः कथयति। किमेतत्। हस्तिपदम्। नैतद्धस्तिपदम्। हस्तिन्या एतत्पदम्। सा च दक्षिणकाणाद्यैव कलभकं जनयिष्यति। तत्र स्त्री अभिरूढा। सापि दक्षिणकाणा। गुर्विणी। अद्यैव पुत्रं जनयिष्यति। यावदात्रेयसकाशं गतः। येन यदानीतं तत्तेनोपदर्शितम्। आत्रेयः कथयति। माणवकाः सर्वमेतद् भैषज्यमेतन्तावदुदकेनैवं विधिनाऽमुकस्य रोगस्य। एवमन्यान्यपीति। जीवकः पृष्टः। त्वया किमानीतम्। स कथयत्युपाध्याय सर्वमेव भैषज्यं नास्ति किञ्चिदभैषज्यम्। अपि तु मया शरमूलमानीतं पाषाणवर्तिका किटालपिण्डश्चेति[1]। किमेभिः प्रयोजनम्। शरमूलैर्वृश्चिकविद्धस्य धूपो[2] दीयते। किटालपिण्डेनोपनाहो[3] दीयते। पाषाणशर्करया काले दधिघटका भिद्यन्ते। आत्रेयेण विपुष्पितम्[4]। माणवकाः संलक्षयन्त्युपाध्यायोऽस्य रुषित इति। ते कथयन्त्युपाध्याय किमेतदेव। अस्माभिरागच्छद्भिरन्तर्मार्गे हस्तिपदं दृष्टम्। एष कथयति। हस्तिन्या एतत्पदम्। सा च दक्षिणकाणा। गुर्विणी। अद्यैव प्रसविष्यति। कलभकं जनयिष्यति। स्त्री तत्राभिरूढा। सापि दक्षिणकाणा। गुर्विणी। अद्यैव प्रसविष्यति। पुत्रं जनयिष्यतीति।

1 97a, l. 5: འདམ་བུ་མདའ་རྒྱའི་རྩ་བ་དང་། རྡོའི་དུམ་བུས་དང་ཕྲུམ་ཚུད་ཅིག་འཚལ་དེ་མཆིསོ། 2 Tib. དུད་པ

3 སྣུན་པར་བགྱིའོ། 4 97a, l. 7: འཛུམ་ཞུང་བ་དང་།=स्मितम्।

आत्रेयः पृच्छति[1] सत्यम्। सत्यमुपाध्याय। कथमेतद् ज्ञायते हस्तिपदं हस्तिन्याः पदमिति। स कथयत्युपाध्याय वयं राजकुले संवृद्धाः कथं न जानीमः। हस्तिपदं परिमण्डलं हस्तिन्यास्तु दीर्घम्। कथं ज्ञायते दक्षिणकाणेति। वामेन पार्श्वेन चरन्ती गता। कथं ज्ञायते गुर्विणीति। पश्चिमौ पादौ निपीडयन्ती गता। कथं ज्ञायतेऽद्यैव प्रसविष्यतीति। सशुक्रप्रस्रावः कृतः। कथं ज्ञायते कलभकं प्रसविष्यतीति। भूयसा दक्षिणं पादमभिपीडयन्ती गता। कथं ज्ञायते तत्र स्त्री अभिरूढेति। अवतीर्य पादयोर्मध्ये प्रस्रावः कृतः। कथं ज्ञायते सापि दक्षिणकाणेति। वामेन पार्श्वेन पुष्पाण्युच्चिन्वन्ती गच्छति। कथं ज्ञायते सापि गुर्विणीति। भूयसा पार्ष्णिं निपीडयन्ती गता। कथं ज्ञायतेऽद्यैव प्रसविष्यतीति। सशुक्रप्रस्रावः कृतः। अपि तु यद्युपाध्यायस्य विमर्षः स सार्थोऽमुष्मिन्प्रदेशे तत्र कञ्चिन्माणवं प्रेषय। तेन माणवः प्रेषितः। सर्वं तथैव यथा जीवकेन समाख्यातम्। आत्रेयो माणवकानामन्त्रयते। माणवकाः श्रुतं वः। उपाध्याय श्रुतम्। इदृशो जीवकः प्राज्ञः।

जीवकेन सर्वं शिक्षितं स्थापयित्वा कपालमोचनीं विद्याम्। यावदन्यतमः पुरुषः कपालव्याधिना स्पृष्ट आत्रेयसकाशं गतः कथयत्यात्रेय मम चिकित्सां कुरु। स कथयति। भोः पुरुष अद्य तावद् गर्तां खानय गोमयं च समुपानय। श्वोऽहं तव चिकित्सां करोमीति। जीवकेन श्रुतम्। स तस्य पृष्ठतः समनुबद्धः। भोः

1 Ms. पृच्छक

पुरुष यत्किंचिदहं शिक्षे सर्वं [1]तत्सत्त्वहितहेतोः। मया कपाल-मोचनी न शिक्षिता। स त्वं सम्प्रति गुप्ते स्थापय यथा तव कर्म क्रियमाणं पश्यामीति। स कथयति। तथा भवत्विति। स तेन प्रतिगुप्ते प्रदेशे स्थापितः। तत आत्रेयेणागत्य स पुरुषो गर्तायां निखातः।[2] कपालमोचन्या विद्यया कपालं मोचितम्। स तं प्राणकं संदंशेन ग्रहीतुमारब्धः। जीवकः कथयत्युपाध्याय मा साहसं करिष्यसि। अद्यैवायं कुलपुत्रः कालं करिष्यतीति। स कथयति। जीवक आगतोऽसि। स कथयति। उपाध्यायागतोऽहम्। तत्कथमयं प्राणकैर्ग्रहीतव्यः। उपाध्याय संदंशं तापयित्वा पृष्ठे स्पृश। पादौ संकोचयिष्यति। ततोऽपनयिष्यसीति। तेन तथा कृतम्। स्वस्थीभूतः। आत्रेयः कथयति। जीवक परितुष्टोऽहं स्नात्वाऽऽगच्छ कपालमोचनीं विद्यां दास्यामीति। स स्नात्वाऽऽगतः। तेन तस्य कपालमोचनी विद्या दत्ता। उक्तश्च। जीवकास्माकं जीविकैषा न त्वयेह विषये प्रयोक्तव्या। उपाध्याय तथा भवतु। जीवक आत्रेयमुपामंत्र्य[3] पुष्करसारिणो[4] राज्ञः सकाशं गत्वोपामंत्रयति। मया वैद्यकं शिक्षितम्। गच्छामीति। तेन खलु समयेन पुष्करसारिणो राज्ञः पाण्डवा नाम खषा[5] विरुद्धाः।

1 Ms. ततसंघहित ; 99a, l. 7: སེམས་ཅན་ལ་ཕན་པའི་ཕྱིར་ཡིན་ན།

2 98b, l. 2: མི་དེ་དོང་དུ་བཅུག་སྟེ།

3 98b, l. 7: ཕྱག་བྱས་ནས།

4 98b, l. 7: པདྨའི་སྙིང་པོ།

5 99a, l. 1: མི་མཐུན་པ་མཐར་འཁོབ་སྐྱ་བསེང་ཞེས་བྱ་བ། खषाः=प्रत्यन्तिकाः

स कथयति । जीवक मम पाण्डवा नाम खषा विरुद्धास्तांस्तावत् संनामय पश्चाद्यास्यसि । एवमस्माकं लोकयात्रा कृता भवति । यस्मात्त्वं प्राज्ञः[1] शक्तश्चेति । तेन तस्य प्रतिज्ञातम् । ततस्तेन चतुरङ्गं बलकायं दत्त्वा प्रेषितः । तेन ते पाण्डवाः खषाः सन्नामिताः । वन्दिगोग्रहकरप्रत्यायांश्च[2] गृहीत्वा[3] स्वस्तितः प्रत्यागतः । यथानीतं च राज्ञे उपनामितम् । तेन परितुष्टेन तस्यैवाऽनुमोदितम् । तेनापि आत्रेयाय दत्तम् ।

ततो जीवकोऽनुपूर्वेण भद्रंकरं नगरमनुप्राप्तः । तत्रैव वर्षारात्रमवस्थितम्[4] । तत्र तेन सर्वभूतरुतं नाम शास्त्रं शिक्षितम् । स भद्रंकरान्नगरात्संप्रस्थितः । अन्यतमश्च पुरुषः काष्ठभारमादाय नगरं प्रविशत्यस्थिचर्मविशेषः समन्ताद् गात्रेणाधरतः । स जीवकेन दृष्ट उक्तश्च । भोः पुरुष केन ते ईदृशी समवस्था इति । स कथयत्यहमपि न जाने । अपि तु मया चैष काष्ठभारको गृहीतो भवति । मम चेदृशी समवस्था इति । स दारुपरीक्षायां कृतावी । स कथयति । भोः पुरुष किमयं काष्ठभारको विक्रीयते । विक्रीयते । कियता मूल्येन । पंचभिः कार्षापणशतैः । तेनासौ क्रीतः । ततः प्रत्यवेक्षता सर्वभूतप्रसादनो नाम मणिर्दृष्टः । तस्येदृशः प्रभावो यदा व्याधितस्य पुरस्तात् स्थाप्यते तदा व्याधिर्यथाभूता च दृश्यते प्रदीपेणेव गृहगतं द्रव्यम् ।

1 Ms. राज्ञः

2 99a, l. 3-4: གདེའུ་བཟུང་དཔྱ་བླངས་ཏེ །

3 Ms. ०प्रत्यायां प्रगृहीत्वा

4 99a, l. 5: Ms. དེ་ཉིད་དུ་དབྱར་གནས་ཏེ །

सोऽनुपूर्वेण उदुम्बरिकामनुप्राप्तः । [1]तत्रान्यतम आढकमापकः पुरुषः । स द्रोणं मापयित्वाऽढकेन शिरसि प्रहारं ददाति । जीवकेन दृष्ट उक्तश्च भोः पुरुष किमर्थमेवं करोषि । शिरो मे अतीव कण्डूयते । आगच्छ पश्यामः । तेन तस्य निषद्य शिरो दर्शितम् । ततो जीवकेन सर्वभूतप्रसादको मणिस्तस्य शिरसि स्थापितो यावत्पश्यति शतपदीम् । ततः कथयति । भोः पुरुष तव शिरसि शतपदी तिष्ठतीति । स पादयोर्निपत्य कथयति चिकित्सां मे कुरुष्वेति । तेन प्रतिज्ञातम् । जीवकः संलक्षयति । उपाध्यायस्यैवोपदेशेन चिकित्सामस्य करोमीति । स तेनोक्तः । भोः पुरुषाद्य गर्तं खानय पार्षिं[2] च समुपानय चिकित्सां करिष्यामीति । स पादयोर्निपत्य प्रक्रान्तः । जीवकेनाप्यपरस्मिन्दिवसे स पुरुषो गर्ते निखाते निखात्य[3] कपालमोचन्या विद्यया कपालं मोचयित्वा तप्तेन संदंशेन शतपदी स्पृष्टा । तया पादाः संकोचिताः । ततस्तेन संदंशेन गृहीत्वा क्षिप्ता । स्वस्थीभूतः । तेन तस्य पंच कार्षापणशतानि दत्तानि । तेनात्रेयाय प्रेषितानि ।

ततो जीवको रोहीतकमनुप्राप्तः । रोहीतकेऽन्यतमस्य गृहपतेरुद्यानं पुष्पफलसलिलसंपन्नम् । स तत्रातीवाध्यवसितः कालं कृत्वा तस्मिन्नेवामनुष्यकेषूपपन्नः । तस्य पुत्रो गृहस्वामी संवृत्तः । तेन तस्मिन्नुद्याने आरक्षकः पुरुषः स्थापितः । स तेनामनुष्यकेण प्रघातितः । द्वितीयः स्थापितः । सोऽपि प्रघातितः । तेन गृहपति-

1 Ms. तस्य    2 100a. 1. 1: ལྕི་བ=Cow-dung

3 Ms. निखत्य

पुत्रेण तदुद्यानमुत्सृष्टम्। यावदन्यतर उदरी मनुष्यः सर्ववैद्य-प्रत्याख्यातस्तदुद्यानं गत्वा रात्रिं वासमुपगतः। अहो वत माम-नुष्यकः प्रघातयेदिति। तस्मिन्नेव च जीवको रात्रिं वासमुपगतः। यावदसावमनुष्यकस्तमुदरिणमभिद्रवितुमारब्धः[1]। स जलोदरो रोगो निष्क्रम्य कथयति। मयाऽयं पूर्वं गृहीतः। किमर्थमेनमभि-द्रवसि। नास्ति ते कश्चित् छागसटाया धूपं दाता[3] येन त्वं द्वादश योजनानि निष्पलायेरिति[4]। सोऽपि कथयति। तवापि नास्ति कश्चिन्मूलकबीजमुदश्विना पिष्ट्वा दाता येन त्वं खण्डं खण्डं विशीर्येथा[5] इति। जीवकेन सर्वं श्रुतम्। स कल्य-मेवोत्थाय तस्य गृहपतेः सकाशं गतः। कथयति गृहपते उद्यानं पुष्पफलसलिलसंपन्नं किमर्थमुत्सृष्टमिति। गृहपतिनास्य यथा-वृत्तमारोचितम्। स कथयति। गृहपते छागलसटाया धूपं देहि। द्वादशयोजनान्यमनुष्यको निष्पलायति। गृहपतिना छागलसटाया धूपो दत्तः। अमनुष्यको द्वादश योजनानि निष्पलायितः। तेनापि गृहपतिना पंच कार्षापणशतानि जीव-काय दत्तानि। तान्यपि तेनात्रेयाय प्रेषितानि।

ततो जीवकेन उदरी पृष्टः। भोः पुरुष किमर्थं त्वमत्रामनु-ष्यकाध्युषिते उद्याने तिष्ठसीति। तेनास्य यथावृत्तमारोचितम्।

1 100b. 1. 2: དམུ་ཆུ་ཅན་དེ་བརྙིགས་པར་བརྩམས་པ་དང་།

2 Ms. रोगान्निष्क्रम्य

3 100b. 1. 2-3: ཁྱོད་ལ་ར་སྐྲའི་དུད་པས་བདུག་པ་དགའ་ཡང་མེད་པ་ལྟ།

4 Ms. निष्पलायेदिति

5 100b, 1. 4: འཛག་པར། Ms. विशर्यैथा।

जीवकेनाभिहितम्। मूलकबीजमुदश्विना पिष्ट्वा पिब। स्वस्थो भविष्यसीति। तेन पीतम्। स्वस्थीभूतः। तेनापि पुरुषेण पंच कार्षापणशतानि जीवकाय दत्तानि। तान्यपि तेनात्रेयाय प्रेषितानि।

ततो जीवकोऽनुपूर्वेण मथुरामनुप्राप्तः। बहिर्मथुराया वृक्षमूले विश्रान्तः। यावन्मल्लेन मल्लो [1]निहतः। तस्यान्त्राणि परावृत्तानि। स मृत इति बहिर्निष्कास्यते। तस्मिंश्च वृक्षे गृध्रिणी सपोतका तिष्ठति। सा तैः पोतकैरुच्यते। अम्ब मांसमनुप्रयच्छेति। सा कथयति। पुत्र कुतो मांसम्। ते कथयन्ति। अम्ब एष मल्लो मल्लेन निहतः[1] कालगतो नीयते। पुत्र जीवकोऽत्र वैद्यराज आगतः। स्थानमेतद्विद्यते यदेनं स्वस्थीकरिष्यति। अम्ब केनैष स्वस्थो भवति। यद्यस्य चूर्णैरन्त्राणि स्पृश्यन्ते। जीवकेन तत्सर्वं श्रुतम्। ततोऽसावुत्थाय मृतसकाशं गत्वा पृच्छति भवन्तः किमेतदिति। ते कथयन्ति। मल्लेन मल्लो निहतः। कालगतः। जीवकः कथयति। स्थापयत। पश्यामि। तैः स्थापितम्। ततो जीवकेन च सर्वभूतप्रसादकमणिः शिरसि स्थापयित्वा प्रत्यवेक्षितः। यावत्पश्यत्यन्त्राणि व्याकुलीकृतानि। तेन नाडिकायां चूर्णं प्रक्षिप्य मुखे वायुना प्रेरितम्। चूर्णेनान्त्राणि स्पृष्टानि। स्वस्थीभूतः। तेनापि जीवकस्य पंच कार्षापणशतानि दत्तानि। तेनाप्यात्रेयाय प्रेषितानि।

1 Ms. निहित

मथुरायामन्यतमो गृहपतिः। तस्य पत्नी रूपयौवनसंपन्ना। स तस्यामत्यर्थमध्यवसितः कालगतः। तस्यामेव योनौ कृमिः प्रादुर्भूतः। सा येन सार्धं परिचारयति स कालं करोति। ततस्तया सार्धं न कश्चित्परिचारयति। तया श्रुतं जीवको वैद्य इहागत इति। सा तस्य सकाशं गत्वा कथयति। जीवक मम व्याधिरस्ति। चिकित्सां कुरु। जीवकस्तां दृष्ट्वा कथालापं च श्रुत्वा संरक्तः कथयति। समयतः[1] चिकित्सां करोमि यदि च मया सार्धं परिचारयसीति। सा कथयति। जिह्रेमि। स कथयति। नास्ति तेऽन्यथा चिकित्सा। नास्त्यात्मसमं प्रेम। तया प्रतिज्ञातम्। ततस्तयात्मना[2] नग्नीभूता। योनिद्वारे मांस-पेशी दत्ता। ततोऽसौ कृमिस्तस्यां लग्नः। स तेन गृहीत्वा क्षिप्तः। स्वस्थीभूता। सा कामरागाध्यवसिता[3] निमित्तमुप-दर्शयति। स कर्णौ पिधाय कथयति भगिनी त्वं मम। तवैषा चिकित्सेति मयैवं कृतमिति। तया तस्मै पंच कार्षापण-शतानि दत्तानि। तान्यपि तेनात्रेयाय प्रेषितानि।

ततो जीवकोऽनुपूर्वेण यमुनातटमनुप्राप्तः। तेन तत्र मानुष-कुणपं दृष्टम्। तस्य मत्स्यैः पार्ष्णिप्रदेशं स्नायुजालमाकृष्यते। सोऽक्षिणी उन्मीलयति निमीलयति च। जीवकेन तत्सर्वमुपल-क्षितं यथा सन्धिबन्धायाः स्नायुगुल्फादयः एवमवस्थिता इति।

1 102a. l. 1: དམ་ཞིག་བཅའ་སྟེ | Cf. above p. 16 fn.

2 102a. l. 2: དེ་ནས་དེས་སྒྲེན་མོར་གྱུར་སྟེ | Ms. ततस्तेन यन्नुतः

3 Ms. ॰वसितानि

सोऽनुपूर्वेण वैशालीं गतः। यावन्मल्लेन मल्लस्य तलप्रहारेणाक्षिपेलांकोलंभितः[1]। स जीवकस्य सकाशं गतः। तेन तस्यां पार्ष्ण्यां स्नायुजालमाकृष्य प्रवेशितम्। तेन तस्य पञ्च कार्षापणशतानि दत्तानि। तेनाभयस्य मातुर्दत्तानि।

वैशाल्यामन्यतमः पुरुषः। तस्य शतपदी कर्णं प्रविष्टा। सा तत्र प्रसूता। सप्तशतान्यपत्यानां जातानि। स कर्णशूलाभ्याहतो जीवकस्य सकाशं गतः। चिकित्सां कुरुष्वेति। जीवकः संलक्षयति। पूर्वं मया उपाध्यायोपदेशेन कर्म कृतमिदानीं स्वमतेन कर्म करिष्यामीति। तेनासौ पुरुषोऽभिहितः। गच्छ भोः पुरुष पत्रमण्डपं कारयत। नीलैर्वस्त्रैर्वेष्टयित्वास्याधस्ताद्भेरीं स्थापय। भूमिं च तापय इति। तेन यथासंदिष्टं सर्वमनुष्ठितम्। ततो जीवकेन तं पुरुषं भूमौ निपातयित्वा[2] सा भूमिरुदकेन सिक्ता। ततो भेरी पराहता[3]। शतपदी प्रावृट्काल इति कृत्वा निष्क्रान्ता। ततो जीवकेन कर्णमूले मांसपेशी स्थापिता। सा पुनः प्रविश्यापत्यानि गृहीत्वा निर्गता। सहापत्यैर्मांसपेश्यां सक्ता। ततो जीवकेन सा मांसपेशीच्छोरिता। स पुरुषः स्वस्थीभूतः। तेन पञ्च कार्षापणशतानि दत्तानि। तान्यपि तेनाभयस्य मातुर्दत्तानि।

1 102b. 1. 2: མིག་གི་འབྲས་བུ་འཕགས་པ་དང །=अक्षितारकोत्पाटितः।

2 For °निपात्य

3 102b. 1. 7: བརྡུངས་པ །

सोऽनुपूर्वेण राजगृहं गतः। राज्ञा बिम्बिसारेण श्रुतं यथा जीवक आगत इति। तेनाजातशत्रोः कुमारस्याज्ञा दत्ता पुत्र भ्राता ते आगच्छति प्रत्युद्गमको गच्छेति। स प्रत्युद्गतः। जीवकेन श्रुतं यथा अजातशत्रुः कुमारः प्रत्युद्गच्छतीति। स संलक्षयति। यद्यहमस्य प्रत्युद्गमनं स्वीकरिष्यामीति यदा राजा भविष्यति तदानर्थं मे करिष्यतीति। स परावृत्यान्येन द्वारेण प्रविष्टः। अपरेण समयेन जीवको महाजनकायपरिवृतो व्याक्षिप्तचित्तो गच्छति। तावदन्यतरो ब्राह्मणोऽक्षिरोगार्तो जीवकस्य सकाशं गतः। भैषज्यं मे व्यपदिशेति। तेन सञ्जातामर्षेणोक्तः। भस्मना पूरय इति। तेन ऋजुकेन भस्मना पूरितम्। स्वस्थीभूतः।

अपरस्याप्यक्षिरोगः। स जीवकसकाशं संप्रस्थितः। तेन ब्राह्मणेन दृष्टः पृष्टश्च। भोः पुरुष क्व गच्छसीति। तेन यथाभूतमाख्यातम्। स कथयति। किं ते जीवकेन। यत्तेन ममोपदिष्टं तत्कुरुष्वेति। श्रद्दधानोऽसौ। तेन भस्मना पूरिते अन्धीभूतः।

अपरेण समयेन राज्ञो बिम्बिसारस्य मूर्ध्नि पिटको जातः। तेनामात्यानामाज्ञा दत्ता। भवन्त आहूयतां वैद्य इति। अमात्यैराहूतः। राज्ञाभिहितः। भवन्तो मूर्ध्नि पिटको जातः। चिकित्सां कुरुष्वेति। ते कथयन्ति। देव जीवके महावैद्ये[ऽव]तिष्ठमाने कथं वयं करिष्यामः। राजा कथयत्याहूयतां भवन्तो जीवकः। तैराहूतः। राजा कथयति। जीवक चिकित्सां कुरुष्वेति। जीवकः कथयति। देव समयतः[1] करोमि यद्यहमेव देवं स्नपयामि। एवं कुरु। ततो

1 103b. l. 5; དམ་ཞིག་བཅའ་སྟེ། Cf. above, p. 36 fn.

जीवकेनामलकं ददता पाचनीयानि द्रव्यानि दत्ताणि। पञ्च च घटशतानि पाचनीयैर्द्रव्यैर्भावितानि। यदा पक्वः तदा प्रच्छन्नं क्षुरेण स्पृष्टः स्फुटितः। ततो रोहणीयानि द्रव्याणि दत्तानि। पञ्चघटशतानि रोहणीयैर्द्रव्यैर्भावितानि। तद्व्रणं रूढं[1] समच्छवि समरोमं संवृत्तम्। राजा स्नातमात्रः कथयति। जीवक चिकित्सां कुरुष्वेति। स कथयति। देव भुंक्ष्व। तावद्राज्ञा भुक्तम्। जीवक चिकित्सां कुरु। देव कृता। स तदन्ते पाणिना परामार्ष्टि[2]। न संजानीते कतरस्मिन्प्रदेशे व्रणमिति। आदर्शं गृहीत्वा व्यवलोकयति तथापि न पश्यति। देवीं पृच्छति। सापि न सञ्जानीते कतरस्मिन्प्रदेशे व्रणमासीदिति। राजा परं विस्मयमापन्न अमात्यानां कथयति। भवन्तो जीवकस्य वैद्यराजाभिषेकं कुरुतेति। सोऽन्धः पुरुषः कथयति। देव किं पुलस्नेहादस्याभिषेकः क्रियते। आहोस्विद्वैद्यवैचक्षण्यादिति। स कथयति। वैद्यवैचक्षण्यात्। यद्येवमहमेवानेनान्धीकृतः। जीवकः कथयति। भोः पुरुष तवाहं दर्शनमपि न समनुपश्यामि कुतः स्वस्थीकरिष्यामि। स कथयति। सत्यमेतदपि तु यस्य त्वयोपदेशः कृतस्तेन ममोपदिष्टम्। किमुपदिष्टम्। अमुकम्। जीवकः कथयति। तस्यान्यो धातुः। तवाप्यन्यः। इदानीमिदं चेदं च कुरु। स्वस्थी भविष्यसीति। तेन कृतम्।

1 104a. 1. 1: རྨ་དེ་སོས་ཤིང །

2 Ms. न तेदन्ते पाणिना 104a. 1. 3: དེ་ཡིད་མ་ཆེས་ནས་ལག་པས་བྲུགས་ན །

स्वस्थीभूतः। कथयति। देव क्रियतामस्य वैद्यराजाभिषेक इति[1]। स हस्तिस्कन्धाभिरूढो महता श्रीसमुदयेन वैद्यराज्येऽभिषिक्तः।

राजगृहेऽन्यतमो गृहपतिर्गुल्मव्याधिना स्पृष्टः। सर्ववैद्यप्रत्याख्यातः। स संलक्षयति। जीवकस्य सकाशं गच्छामीति। यदि चिकित्सां करिष्यत्यतीव कुशलं नोचेदात्मानं घातयिष्यामीति। स जीवकसकाशं गतः। जीवक चिकित्सां मे कुरु। स कथयति। भोः पुरुष दुर्लभानि तव भैषज्यानीति। स संलक्षयति। जीवकेनाप्यहं प्रत्याख्यातः। किमत्र प्राप्तकाल आत्मानं घातयिष्यामीति। श्मशानं गतः। तत्र चितायां ज्वलन्त्यां बभ्रुनकुलश्चन्दनगोधा च युध्यमानौ पतितौ। तेन क्षुधार्तेन तावुभावपि भक्षितौ। देवश्च वृष्टः। श्मशानात्प्रघरत्तच्चितोदकं पीतम्। श्मशानस्य नातिदूरे गोकुलम्। तत्र गत्वा कोद्रवोदनं मथितं च पीतम्। गुल्मः स्फुटितः। ऊर्ध्वमधश्च विरिक्तो यथा पौराणः संवृत्तः।

अपरेण समयेन वैदेह्या गुह्यप्रदेशे पिटको जातः। तया राज्ञे निवेदितम्। राज्ञा जीवकोऽभिहितः। अपरमातुश्चिकित्सां कुरुष्वेति। तेन प्रतिज्ञातम्। ततः सक्तून्[2] पिण्डीकृत्य धात्र्या दत्ताः। अस्यान्तिके निषादयितव्येति। तया सा निषादिता। जीवकेन सक्तुपिण्डं दृष्टा संलक्षितः। अमुष्मिन्प्रदेशे इति। ततः पाचनीयानि द्रव्याणि दत्तानि। पक्वं ज्ञात्वा सक्तुपिण्डमध्ये शस्त्रकं प्रक्षिप्य धात्र्यभिहिता। अस्यान्ते ईषन्निषादयितव्या देवी। निषद्याकाशे[3] धारयितव्येति। तया तथाकृतम्। शस्त्रसंपात-

1 Ms. मिति 2 Ms. सक्तुः 3 105a, 1. 6: སླད་སློང་ཤིག |=lift again.

समकालमेव पिटकः स्फुटितः। ततो रोहणीयद्रव्यपरिभावितेन कषायाम्भसा शोचितः। रोहणीयानि द्रव्याणि दत्तानि। स्वस्थीभूता। जीवको राज्ञः सकाशं गतः। राजा कथयति। जीवक कृता तेऽपरमातुश्चिकित्सा। देव कृता। मा ते विनग्ना दृष्टा। देव न दृष्टा। कथं कृता। तेन यथावृत्तमारोचितम्। राजा परं विस्मयमापन्नः। तेनामात्या उक्ताः। द्विरपि जीवकस्य वैद्यराजाभिषेकं कुरुथेति। योऽसौ गुल्मी पुरुषो जीवकेनाभिहितो दुर्लभानि भैषज्यानीति स कथयति। देव किं पुत्रस्नेहादस्याभिषेकः क्रियते। आहोस्विद्वैद्यवैचक्षण्यात्। वैद्यवैचक्षण्यात्। यद्येवमहमनेन न स्वस्थीकृतः। जीवकः कथयति। भोः पुरुष न मया तव चिकित्सा कृता। अपि तु मयोक्तं दुर्लभानि ते भैषज्यानीति। स कथयति। कीदृशानि मम भैषज्यानीति। जीवकः कथयति। यदि कृष्णचतुर्दश्यामेकपिङ्गलः पुरुषः कालं करोति। तस्य श्मशाने ध्माप्यमानस्य बभ्रुनकुलश्चन्दनगोधा च चितायां पतितः। तौ त्वं भक्षयसि। महेन्द्रो[2] देवो वर्षति। श्मशानाच्च प्रघरितं चोदकं पिबसि। ततः कोद्रवोदनं भुंक्षे मथितं च पिबसि एवं त्वं स्वस्थो भवस्येत[2]न्मत्वा[3] मयोक्तं दुर्लभानि ते भैषज्यानीति। स कथयति। साधु सुष्ठु परिज्ञातम्। एतदेव मयोपयुक्तम्। ततोऽभिप्रसन्नः कथयति। देव शक्योऽस्य वैद्यराजाभिषेकः। अभिषिच्यतामिति। द्विरपि वैद्यराज्येऽभिषिक्तम्।

1 Ms. ध्याप्यमानस्य 2 Ms. माहीन्द्रो 105b, l. 6 : དབང་ཕྱུག་ཆེན་པོའི་ལྷ།

3 106a, l. 1 : དེ་ལས་བསམ་ནས། | Ms. एतत् सत्त्वाय

यदा अजातशत्रुणा देवदत्त-कल्याणमित्रविग्राहितेन पिता धार्मिको धर्मराजो जीविताद्व्यपरोपितः तदास्य गुल्मरोगः प्रादुर्भूतः। तेन वैद्यानामाज्ञा दत्ता। चिकित्सां कुरुष्वेति। ते कथयन्ति। देव जीवकोऽनुत्तरो वैद्यराजो देवस्य भ्राता[1]। तस्मिन् स्थिते का शक्तिरस्माकं चिकित्सां कर्तुमिति। तेनामात्यानामाज्ञा दत्ता। आहूयतां भवन्तो जीवक इति। तैराहूतः। जीवक गुल्मरोगो मे प्रादुर्भूतः। चिकित्सां कुरुष्वेति। देव करोमि। स संलक्षयति। द्वाभ्यां कारणाभ्यां गुल्मो भिद्यते। अत्यन्त-हर्षेण वा अत्यन्तरोषेण वा। तदयं पापकारी सत्त्वः। कुतोऽस्या-त्यन्तहर्षः। सर्वथा रोषयितव्य इति विदित्वा कथयति। देव समयेन चिकित्सां करोमि। यद्युदायिभद्रस्य कुमारस्य मांसं परिभुंक्ष्वेति। श्रुत्वा राजा रुषितः कथयति। शोभनम्। मया पिता जीविताद् व्यपरोपितः। त्वमप्युदायिभद्रं जीविताद् व्यपरोपय। अहमपि स्वयमेव रोगेण कालं करिष्यामि। त्वमपि राजा भविष्यसीति। स कथयति। देव एषा चिकित्सा। न शक्यमन्यथा स्वस्थेन भवितुमिति। नास्त्यात्मसमं प्रेम। तेना-भ्युपगतम्। ततो जीवकेन उदायिभद्रः कुमारः सर्वालंकार-विभूषितः कृत्वा राज्ञ उपनामितः। देव अयमुदायिभद्रः कुमारः सुनिरीक्षितमेनं कुरु। न भूयो द्रक्ष्यसीति। ततस्तेनो-पदर्श्य गृहं नीत्वा स्थापितः। ततो जीवको मांसार्थी शीतवनं श्मशानं गतः। अशून्यं च शीतवनं श्मशानं मृतकुणपेन।

1 Ms. त्रातः

ततस्तेन कुणपमांसं [1]गृहीत्वोपकरणविशेषैः साधयित्वा भोजनकाले राज्ञ उपनामितम्। ततो राजा अजातशत्रुः मांसशरावं[2] गृहीत्वा[3] भक्षयिष्यामीति जीवकेनाच्छिद्य[4] कपोले प्रहारो दत्तः। पापकारिन् त्वया पिता धार्मिको धर्मराजो जीविताद्व्यपरोपितः। इदानीं पुत्रमांसमपि भक्षयसीति। स रुषितः कथयति। यद्येवं किमर्थं प्रघातितः। संजातामर्षस्य चास्य गुल्मः स्फुटितः ऊर्ध्वमधश्च विरिक्तः। स रुधिर एव मुखेनागतः। यं दृष्ट्वा मूर्च्छितः पृथिव्यां पतितः। ततो जलाभिषेकप्रत्यागतप्राणं[5] स्नपयित्वा सांप्रेयभोजनं[6] दत्तम्। यथा पौराणः संवृत्तः। ततो जीवक उदायिभद्रं कुमारं सर्वालंकारविभूषितमादाय राज्ञः सकाशमुपसंक्रान्तः। पादयोर्निपत्य कथयति। देव अयमुदायिभद्रः कुमारो न शक्यं मया कुन्तपिपीलकमपि प्राणिनं जीविताद् व्यपरोपयितुं प्रागेव कुमारम्। अपि त्वनेनोपायेन चिकित्सेति मयोपायसंविधानं कृतमिति। राजा परं विस्मयमुपगतः। तेनामात्यानामाज्ञा दत्ता। जीवकस्य वैद्यराजाभिषेकं कुरुध्वेति। अमात्यैर्हस्तिस्कन्धाभिरूढो महता श्रीसमुदयेन त्रिरपि वैद्यराजाभिषेकेणाभिषिक्तः।

1 Ms. ग्रही०

2 Ms. 106b, l. 6: ཕོར་པ =drinking cup

3 Ms. ग्रहीत्वा

4 106b, l. 7: ཕྲོགས་ནས །

5 Ms. ०प्राणो

6 107a, l. 2: འཕྲོད་པའི་ཟས །=health-recruiting food

ततो जीवकस्य मद उत्पन्नः। न मया समः कश्चिद्वैद्यो-ऽस्ति। अहं कायचिकित्सकानामग्रः। भगवानपि चित्तचिकित्स-कानामग्र इति। सोऽपरेण समयेन भगवत्सकाशमुपसंक्रान्तः। स मदावलेपेन सत्यानि न पश्यति। भगवान् संलक्षयति। जीवको वैद्यराज [1]आहृतकुशलमूलः किमर्थं सत्यानि न पश्यति। मदावलेपात्। मदापनयोऽस्य कर्तव्य इति। तत्र भगवान् जीवकं वैद्यराजमामन्त्रयते। दृष्टस्ते जीवक हिमवत्पर्वतराजः। नो भदन्त। गृहाण तथागतस्य चीवरकर्णकः। तेन गृहीतम्। अथ भगवान् जीवकं वैद्यराजमादाय येन हिमवान्पर्वतराजस्तेनोपसंक्रान्तः। तत्र नानाविधौषधयो दीपवज्ज्वलन्ति। भगवान् जीवकं वैद्यराजमि-दमवोचत्। गृहाण जीवक यथाभिप्रेता ओषधीः। भगवन् [बिभेमि]। तत्र भगवान् यक्षं [2]वज्रपाणिमामन्त्रयते। गच्छ वज्रपाणे जीवक-स्यारक्षां कुरु। स गतस्तेन नानाविधा ओषधयो गृहीताः। भगवान् कथयति। जीवक किं नामेयमोषधिः। स कथयति। भगवन्नमुका। अनेन विधानेनामुकस्य व्याधेरुपशमनीति। इय-मप्यमुका। अमुकस्य व्याधेः प्रशमनीति। अपरासां नामानि न जानीते। यां न जानीते तां भगवान् कथयति। जीवक इयम-मुका। अमुकेन विधानेनामुकस्य व्याधेः प्रशमनी। इयमप्यमुक-स्येति। जीवकः कथयति। वैद्यकमपि भगवान् जानीत इति। तत्र भगवान् जीवकं वैद्यराजमामन्त्रयते। चतुर्भिर्जीविकाङ्गैः समन्वा-

1 Ms. आहित

2 Ms. भगवान् चरणमपि...मामन्त्रयते

गतो भिषक् [1]शल्याहर्ता राजार्हश्च भवति राजयोग्यश्च राजाङ्गत्वे च संख्यां[2] गच्छति[3] । कतमैश्चतुर्भिरिह भिषक् शल्याहर्ता । आबाधकुशलो भवति । आबाधसमुत्थानकुशलश्च । उत्पन्नस्याबाधस्य प्रहाणकुशलः । प्रहीणस्यायत्यामनुत्पादकुशलः । कथमाबाधकुशलो भवति । इह भिषक् शल्याहर्ताबाधं जानात्ययमाबाध एवंरूपश्चैवंरूपश्चेत्येवमाबाधकुशलो भवति । कथमाबाधसमुत्थानकुशलो भवति । इह भिषक् शल्याहर्ताबाधं जानात्ययमाबाधो वातसमुत्थो वा पित्तसमुत्थो वा श्लेष्मसमुत्थो वात्मोपक्रमिको वा परोपक्रमिको वा सांनिपातिको वा ऋतुपरिणामिको वेत्येवमाबाधसमुत्थानकुशलो भवति । कथमुत्पन्नस्याबाधस्य प्रहाणकुशलो भवति । इह भिषक् शल्याहर्ताबाधं जानात्ययमाबाधोऽञ्जनेन वा प्रत्यंजनेन वा वमनेन वा विरेचनेन वोर्ध्वविरेचनेन वाधोविरेचनेन वा नस्तकर्मणा[4] वा धूपदानेन वा स्वेदपरिकर्मणा वा प्रहास्यतीत्येवमुत्पन्नस्याबाधस्य प्रहाणकुशलो भवति । कथं प्रहीणस्याबाधस्यायत्यामनुत्पादकुशलो भवति । इह भिषक् शल्याहर्ताबाधं जानात्ययमाबाध एवंरूपाभिश्चैवंरूपाभिश्च सांप्रेयाभिः क्रियाभिः क्रियमाणाभिः प्रहीण आयत्यां नोत्पत्स्यत इत्येवं प्रहीणस्याबाधस्यायत्यामनुत्पाद-

1 Ms. फल्याहर्ताराजार्हतश्च 2 Ms. संज्ञां ; 108a, l. 6: གྲངས་སུ་འགྲོའོ །

3 Tib. ends here a section: འདུལ་བ་གཞི ། བམ་པོ་དྲུག་ཅུ་གཉིས་པ །

4 Ms. अनस्त 108b, l. 5: སྣར་བླུགས་པ ། Cf. काश्यपसंहिता edited by Rājpaṇḍit Hemraj Sarmā, p. 127 ; *Mvyut.* 272. 88.

कुशलो भवति। एवं चतुर्भिरङ्गैः समन्वागतो भिषक् शल्याहर्ता राजार्हश्च भवति राजयोग्यश्च राजाङ्गत्वे च संख्यां गच्छति। एवमेव चतुरङ्गैः समन्वागतस्तथागतोऽर्हन् सम्यक्संबुद्धोऽनुत्तरो भिषक् शल्याहर्ता इत्युच्यते। कतमैश्चतुर्भिः। इह जीवक तथागतोऽर्हन्सम्यक्संबुद्धः। इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति। इदं दुःखसमुदयमिदं दुःखनिरोध इदं दुःखनिरोधगामिनीप्रतिपदार्यसत्यमिति यथाभूतं प्रजानाति। न खलु जीवक भिषक् शल्याहर्ता जातिमूलकानां दुःखानां प्रहाणाय भैषज्यं जानाति। नापि जराव्याधिमरणशोकपरिदेवनदुःखदौर्मनस्योपायासमूलकानां दुःखानां प्रहाणाय भैषज्यं जानाति। तथागतस्तु जीवक जातिमूलकानां दुःखानां प्रहाणाय भैषज्यं जानाति। जराव्याधिमरणशोकपरिदेवनदुःखदौर्मनस्योपायासमूलकानां दुःखानां प्रहाणाय भैषज्यं जानाति। तस्मात्तथागतोऽर्हन्सम्यक्संबुद्धोऽनुत्तरो भिषक् शल्पाहर्तेत्युच्यते। अस्मिन् खलु धर्मपर्याये भाष्यमाणे जीवकस्य कुमारभूत्यस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नम्। अथ जीवकः कुमारभूतो दृष्टधर्मा प्राप्तधर्मा विदितधर्मा पर्यवगाढधर्मा तीर्णकांक्षस्तीर्णविचिकित्सोऽपरप्रत्ययोऽनन्यनेयः शास्तुः शासने धर्मेषु वैशारद्यप्राप्तः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदवोचत्। अभिक्रान्तोऽहं भदन्ताभिक्रान्तः। एषोऽहं भगवन्तं शरणं गच्छामि धर्मं च भिक्षुसंघं चोपासकं च। मां धारयाद्याग्रेण

यावज्जीवं प्राणोपेतं शरणगतमभिप्रसन्नम्। अथ जीवको वैद्यराजो भगवत पादौ शिरसा वन्दित्वा भगवतोऽन्तिकात् प्रक्रान्तः।

हिमवान्पर्वतराजो हिमसंयोगान्नित्यं शीतलो भगवतः साभिष्यन्दं[1] ग्लानमुत्पन्नम्। जीवको वैद्यराजः संलक्षयति। स्वयमेवाहं भगवत उपस्थानं करोमि तद्यथा राज्ञश्चक्रवर्तिन इति। ततो जीवकेन द्वात्रिंशदुत्पलानि स्रंसनीयैर्द्रव्यैर्भावयित्वा भगवते दत्तानि। जिघ्रतु भगवानेतानीति। भगवता घ्रातानि। द्वात्रिंशदेवोत्थानानि लब्धानि। ततो भगवन्तं पृच्छति। कच्चिद्भगवान् सम्यग्विरिक्त इति। भगवानाह। सन्ति जीवक ते दोषाः[2]। ये च्युता न स्रुताः सन्ति। स्रुता न च्युताः सन्ति। स्रुताश्च्युताश्च सन्ति। नैव स्रुता न च्युता इति। जीवकः कथयति। भगवन् यद्येवं गुडहरीतकीं भक्षय। मण्डानुपूर्वीं[3] च कुरुष्वेति। भगवता तथाकृतम्। स्वस्थो जातः।

आचरितं जीवकस्य यस्य कस्यचिद्राज्ञो वा राजमात्रस्य वा चिकित्सां करोति स तस्मै ग्रामं वा ग्रामवरं वा प्रयच्छति। यावदपरेण समयेन जीवकेन विदेहराजस्य चिकित्सा कृता। तेन तस्मै शतसहस्रमूल्यं बृहतिकाप्रावरणं दत्तम्। स तमादाय

1 110a, l. 2: གྲང་ནད་ཀྱི་སྐྱུན་གྱིས་ཐེབས་པ་དང །

2 110a, l. 6: སྐྱོན་གང་དག་གཡོས་ལ་མ་འབྲུས་པ་དེ་དག་ཀྱང་ཡོད་དེ །

3 110b, l. 1: ཁུ་བའི་རིམ་པ །

येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्ते निषण्णो जीवकः कुमारभृतो भगवन्तमिदमवोचत्। आचरितं भदन्त मम यस्य राज्ञो वा राजमात्रस्य वा चिकित्सां करोमि स मे ग्रामं वा ग्रामवरं वानुप्रयच्छति। तन्मया विदेहराजस्य चिकित्सा कृता। तेन मे शतसहस्रमूल्यं वृहतिकाप्रावरणं दत्तम्। तदहं भगवतेऽनुप्रयच्छामि। तद्भगवान्प्रतिगृह्णात्वनुकम्पामुपादायेति। प्रतिगृह्णाति भगवान् जीवकस्य कुमारभृतस्यान्तिकाच्छतसहस्रमूल्यं वृहतिकाप्रावरणम्। तेन खलु समयेनायुष्मानानन्दो भगवतः पृष्ठतः स्थितोऽभूद् व्यजनं गृहीत्वा भगवन्तं वीजयन्। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। गृहाणानन्द शतसहस्रमूल्यं वृहतिकाप्रावरणं ममार्थाय शस्त्रलूनं कुरूष्वेति। तत आयुष्मानानन्दो गृहीत्वा विस्तीर्णविकाशं पृथिवीप्रदेशं गत्वा मापयितुमारब्धः। पश्यति बहूनि चीवराणि संपद्यन्ते। ततस्तेन भगवतस्त्रिचीवरं कृतमात्मनः सान्तरोन्तरमायुष्मतश्च राहुलस्य कुसूलकः[1]। तं खलु वर्षावासं भगवतः पंच पटशतानि संपन्नानि। भिक्षुसंघस्य चानेकानि[2]। भिक्षवो न जानीते कथं प्रतिपत्तव्यमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि। भिक्षुभिर्गृहपतिचीवरकाणि शस्त्रलूनानि दुर्वर्णीकृत्य धारयितव्यानि।

1 Cf. Mvyut. 272. 54 : कुसुलक

2 Ms. चानीकानि

आचरितं राज्ञो बिम्बिसारस्य भिक्षुं वा भिक्षुणीं वा दृष्ट्वा हस्तिस्कन्धादवतीर्य पादाभिवन्दनं करोति। सोऽपरेण समयेन हस्तिनमभिरुह्य भगवतः पादाभिवन्दकः संप्रस्थितः। यावत्पश्यत्यन्तर्मार्गे आजीवकम्। स तस्य जातसंभ्रमो हस्तिस्कन्धादवतीर्य पादयोर्निपतितः। तत्र ये अश्राद्धास्ते संलक्षयन्ति। न केवलं देवो भिक्षुष्वेवाभिप्रसन्नः। आजीवकेष्वप्यभिप्रसन्न इति। ये तु श्राद्धास्ते संलक्षयन्ति। नूनं देवो भिक्षुरिति कृत्वा ससंभ्रमोऽस्य हस्तिस्कन्धादवतीर्य पादयोर्निपतित इति। ते सन्दिग्धमनसो राजानमूचुः। कस्य देवेन वन्दना कृता। भगवतः श्रावकस्य। देव आजीवक एष न भगवतः श्रावकः। अथ राज्ञो बिम्बिसारस्यैतदभवत्। एतदेव मे करणीयं भवत्विति। स येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णः। एकान्तनिषण्णो राजा मागधः श्रेण्यो बिम्बिसारः भगवन्तमिदमवोचत्। आचरितं मम भदन्त भिक्षुं वा भिक्षुणीं वा दृष्ट्वा हस्तिस्कन्धादवतीर्य तस्य पादाभिवन्दनां कर्तुम्। तदहं संजातसंभ्रमो हस्तिस्कन्धादवतीर्य भिक्षुरिति कृत्वा आजीवकस्य पादयोर्निपतितः। अहो वत भगवन्नार्यकाणां चीवरकेषु किंचिच्चिह्नं प्रज्ञापयेदनुकम्पामुपादायेति। अधिवासयति भगवान् राज्ञो बिम्बिसारस्य तूष्णींभावेन। अथ राजा बिम्बिसारो भगवतस्तूष्णींभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दित्वा प्रक्रान्तः। तत्र भगवान् भिक्षूनामन्त्रयते स्म। हंभो

भिक्षवः स आजीव उपहतश्च येन दृष्टसत्यस्यान्तिकाद्वन्दना स्वीकृतेति[1] ।

तेन खलु समयेनायुष्मानानन्दो भगवतः पृष्ठतः स्थितोऽभूद् व्यजनं गृहीत्वा भगवन्तं वीजयन् । तत्र भगवानायुष्मन्तमानन्द-मामन्त्रयते । दृष्टस्ते आनन्द वैदेहकः पर्वतः । नो भदन्त । गृहाण तथागतस्य चीवरकर्णकम् । तेन गृहीतम् । अथ भगवान्[1] तत एव ऋध्या[2] उपरि विहायसा प्रक्रान्तः । राजगृहेऽन्तर्हितो वैदेहके पर्वते प्रातिष्ठत[3] । तेन खलु समयेन मागधकानां मनुष्याणां क्षेत्राणि समानि समोपविचाराणि[4] आवलीविनिबद्धानि भक्ति[5]-रचनाविशेषविचित्राणि दृष्ट्वा च पुनरायुष्मन्तमानन्दमामन्त्रयते । दृष्टानि ते आनन्द एतानि क्षेत्राणि समानि [4]समोपविचाराण्या-वलीविनिबद्धानि [5]भक्तिरचनाविशेषविचित्राणि । दृष्टानि भदन्त । तस्मादानन्द अनेनाकारेण भिक्षुभिश्चीवराणि छित्वा सेतव्यानि । स्थविरानन्देन भिक्षूणामारोचितम् । युष्माभिरनेनाकारेण चीवर-कानि पाटयित्वा सेतव्यानीति । भिक्षवः पाटयित्वा चीव-राणि [6]सेतुमारब्धाः । एकेन पार्श्वेन पत्रमुखानि पातयन्ति । न शोभन्ते । आयुष्मानानन्दः संलक्षयति । किंचापि भगवता नानु-

1 112a, l. 5-6: དགེ་སློང་དག་འཚོ་བ་པ་གང་གིས་བདེན་པ་ མཐོང་བ་ལ་ཕྱག་བདག་གིར་བྱས་པ་ཉམས་དེ ། Tib. adding མི་རུང་ངོ ।=न युक्तम् ।

2 Ms. रिध्या　　3 Ms. प्रतिष्ठात्

4 112b, l. 3: ཉེ་འཁོར་མཉམ་པ་ ཐང་གི་ཁྱད་པར་ སྣ་ཚོགས་དག་ཐང་སྐྱལ་གྱིས་འབྲེལ་ ཅིང་མཛེས་པ་དག་གཟིགས་ནས ། Ms. समोपचिवाराणि

5 Ms. भक्ती०　　6 Ms. सेन्तुमारब्धाः

ज्ञातम् । स्थानमेतद्विद्यते यदेतदेव प्रत्ययं कृत्वा अनुज्ञास्यतीति । तेनोभयपार्श्वयोः पत्रमुखानि[1] दत्तानि । तथाप्यनुपातं[2] विना न शोभते इत्यनुपातो दत्तः। ततः कृतनिश्चितं भगवत उपनामितम्[3]। भगवानाह । साधु साध्वानन्द यन्मया नानुज्ञातं तत्त्वया विज्ञातम् । तस्मादनुजानामि भिक्षुभिरनेनाकारेण चीवराणि छित्वा सेवितव्यानि । भिक्षव एकैकं चीवरं छित्वा स्यूत्वा धावयितुं प्रवृत्ताः । अवशिष्टान्यच्छिन्नानि ।

ततो भगवान्मगधेषु जनपदेषु चारिकां चरन्नाटविकामनुप्राप्तः। आटविकायां विहरत्यग्राटविके दावे। आटविका नदी समीपसंयोगाच्छीतला प्रवाता[4] च । भगवता प्रथमे यामे अन्तर्वासः प्रावृतः। मध्यमे यामे उत्तरासङ्गः। पश्चिमे यामे आयुष्मन्तमानन्दमामन्त्रयते। अनुप्रयच्छ मे आनन्द संघाटीमिति । तत आयुष्मतानन्देन हस्तौ प्रक्षाल्य भगवत उपरिष्टाद्दत्ता[5] संघाटी । सा रात्रिर्भगवता त्रिचीवरेणातिनामिता । ततः प्रभातायां रजन्यां संलक्षयति । ये केचिल्लोके सुकुमारकाः सुखैषिणः। अहं तेषामग्रः। तदहं शक्नोमि त्रिचीवरेण यापयितुं किं पुनर्मे श्रावका इति विदित्वा भिक्षूनामन्त्रयते स्म । तस्मात्तर्हि भिक्षवो भिक्षुभिश्छिन्नं त्रिचीवरं धारयितव्यमिति ।

1 113a, l. 1: སྣམ་བུ་ཧྲམས་ཁ །=border.

2 Ibid. l. 2: མཐའ་སྐོར ། 3 Ms. उपनिमित्तः ; 113a, l. 2: ཕུལ་ལོ

4 113a, l. 5: གྲང་ཞིང་རླུང་ལྡང་བར་གྱུར་ནས ། Ms. प्रवालता

5 Ms. ०दन्त ; 113a, l. 7: གཡོགས་དེ=प्रावृतः

उक्तं भगवता छिन्नं त्रिचीवरं धारयितव्यमिति। अन्यतमस्य भिक्षोस्त्रिचीवरं नास्ति। तस्य नमतं संपन्नम्[1]। स तच्छेत्तुमारब्धः। भगवांश्च तं प्रदेशमनुप्राप्तः पृच्छति। भिक्षो किमिदम्। उक्तं भदन्त भगवता भिक्षुणा छिन्नं त्रिचीवरं धारयितव्यमिति। मम तृतीयं चीवरं नास्ति। पर्येषमाणस्य मे इदं नमतं संपन्नम्। छित्वा चीवरं करोमि। नैतद्भिक्षो छेदनार्हमपि त्वासीवकार्हम्।[2] सीवकं[3] कृत्वा धारय। इत्युक्त्वा प्रक्रान्तः। भिक्षुसंघं सन्निपात्य पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षूनामन्त्रयते स्म। अमुकस्य भिक्षवो भिक्षोश्चीवरं नास्तीति नमतं छेदयतीति। तस्मात्तर्हि भिक्षवः पञ्चाछेद्यानि। सर्वं नमतं। सर्वं प्रावारकं। सर्वं कोचवं[4]। सर्वं लेलोहितं[5]। सर्वं[6] स्थूलकम्बलञ्चेति। आसीवकांस्तु दत्वा धारयितव्यम्।

---

श्रावस्त्यां निदानम्[7]। राज्ञः प्रसेनजितः कोसलस्य मृगारो नाम अग्रामात्यः। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया

1 113b, l. 4: སྲིང་པ་ཞིག་རྙེད་ནས=कम्बलं संप्राप्तम्

2 113b, l. 6-7: འོན་ཀྱང་ལྷན་ཐབས་ཀྱིས་ཀླན་པའི་འོས་ཡིན་པས ।=sewing together. Ms. त्वासेवकार्हं

3 Ms. सेवकं

4 Mvyut. कोचवकं ; Tib. སྣམ་བུ=hairy cloth. Cf. *Mahāvagga*, viii. 1.36: कोजवं

5 114a, l. 3: སེང་རས=विरलिका in Mvyut. 271. 39.

6 Ms. वस्त्रं ; Ibid. ཀླམ་ཐམས་ཅད

7 Ms. निधानं

सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः। एवं यावत्सप्त पुत्रा जाताः। तत्र षण्णां यथाभिप्रेतव्यवस्थम्। तेन नामानि व्यवस्थापितानि। यस्तु कनीयांस्तस्य विशाख इति नामधेयं व्यवस्थापितम्। यावन्मृगारस्य पत्नी कालगता। तेन षण्णां पुत्राणां निवेशः कृतः। ते स्वकस्वकाभिः पत्नीभिः सार्धं मण्डनपरमा व्यवस्थिताः। गृहकार्यं न चिन्तयन्ति। मृगारो गृहपतिः करे कपोलं दत्वा चिन्तापरो व्यवस्थितः। तस्य सप्रेमको ब्राह्मण आगतः। स तेन चिन्तापरो दृष्टः। स कथयति। गृहपते किमसि चिन्तापरः। ममामी पुत्राः स्वकस्वकाभिः पत्नीभिः सार्धं मण्डनपरमा व्यवस्थिताः। गृहकार्यं न चिन्तयन्ति। गृहमवसादं गमिष्यतीति। स कथयति। विशाखस्य कस्मान्निवेशो न क्रियते। को जानीयात्कदाचित्सोऽपि पापतरो भवेत्। एतदपि न ज्ञायते कदाचिच्छोभनतरो भवेत्। यदि तेऽनुमतं समन्वेषयामि दारिकाम्। एवं कुरु। स गवेषमाणोऽनुपूर्वेण चम्पामनुप्राप्तः।

चम्पायां बलमित्रो नाम गृहपतिः। तस्य विशाखा नाम दुहिता रूपयौवनवती नयविनयसंपन्ना पण्डिता पटुप्रचारा। सा यथाभिप्रेतमनोहराभिर्दारिकाभिः सार्धमुद्यानभूमिं संप्रस्थिता। स च ब्राह्मणस्तं प्रदेशमागतः। तेन सा दारिका दृष्टा। स संलक्षयति। आसामेव तावत्परीक्षा कर्तव्येति। स च[1] आसामवधानतत्परो मन्दगतिप्रचारतया पृष्ठतोऽनुबद्धः। प्रायो नार्यश्चलत्स्वभावाः[2]।

1 Ms. सह 2 Ms. ०सुभावा

तासां काचिद् धावति काचिदुत्पतति काचिन्निपतति काचिद् हसति काचिद् गात्रविक्षेपं करोति काचिद् गायति । इमानि चान्यानि च दुर्वृत्तचेष्टितानि कुर्वन्ति । सा तु विनयसंपन्ना मन्दगतिप्रचारा ताभिः सार्धं गच्छति । यावदुद्यानं संप्राप्तास्ता दारिकाः पुष्करिण्यास्तीरे वस्त्राणि स्थापयित्वा सहसावतीर्य क्रीडितुमारब्धाः । सा तु यथा यथा पानीयमवतरति तथा तथा वस्त्रमुत्क्षिप्या-वतीर्णा तथैव शान्तेनेर्यापथा यथा यथा व्युत्तिष्ठते तथा तथा वस्त्र-मवतारयति। ततः स्नातप्रयता एकस्मिन स्थाने स्थिता। ता दारिका आत्मना प्रथमतो भुक्त्वा परिजनं परिवेष्टुमारब्धाः । सापि पूर्वं परिजनं परिवेष्य पश्चादात्मना परिभोक्तुमारब्धा । ततो भुक्तपीता उद्यानसुखमनुभूय संप्रस्थिता । यावदन्तर्मार्गे पानीयमुत्तर्तव्यं ता दारिका उपानहौ छोरयित्वोत्तीर्णाः । सा तु सोपानत्कैव पुनः संप्रस्थिता । तासामारामसंप्रवेशो जातः । सा छत्रमादाय आम्रवनमतिक्रान्ता । अन्याभिश्छत्राणि छोरितानि । ततो वात-वर्षं प्रादुर्भुतम् । तदा दारिका देवकुलं प्रविश्यावस्थिताः । सा त्व-भ्यवकाश एव । स ब्राह्मणस्तस्यास्तादृशलक्षणप्रचारान् दृष्ट्वा ततो जातकुतूहलस्तां दारिकां प्रष्टुमारब्धः । दारिके कस्य त्वम् । बलमित्रस्य दुहिता । पुत्रि पृच्छामि । तेन किञ्चित्त्वया कोपः करणीयः । सा स्मितपूर्वङ्गमा कथयति । तात पृच्छ । कोऽत्र कोपः । पुत्रि सर्वा एव दारिका धावन्त्य उत्पतन्त्यो निपतन्त्यो गात्रविक्षेपं कुर्वन्त्य इमानि चान्यानि च दुर्वृत्तचेष्टितानि कुर्वन्त्यो गच्छन्ति त्वं पुनर्विनयसम्पन्ना मन्दगतिप्रचारतया आभिः

सार्धमुद्यानं गच्छसीति । सा कथयति । सर्वा दारिका मातापित्रो-विक्रेयं द्रव्यम्[1] । यदि मम उत्पतन्त्या निपतन्त्या वा हस्तः पादो वा भिद्यते को मां प्रार्थयते । न त्वहं यावज्जीवमेव मातापित्रोः पोष्या भविष्यामि । पुत्रि शोभनं गतमेतत् । इदमपरं पृच्छामि । एता दारिका वस्त्राण्येकान्ते स्थापयित्वा द्वितीयवस्त्रवियुक्ताः सहसावतीर्य क्रीडितुमारब्धाः । त्वं पुनर्यथा यथा पानीयमवतरति तथा तथा वस्त्रमपनयसि । तात ह्रीव्यपत्राप्यसम्पन्नो मातृग्रामः । यदि मां कश्चित्पश्यत्यपावृतामयुक्तम् । पुत्रि कस्त्वां तत्र पश्यति । तात त्वयैव तावदहं दृष्टा स्याम् । पुत्रि शोभनमेतदपि गतम् । इदमपरं पृच्छामि । एता दरिकाः पूर्वमात्मना भुक्त्वा पश्चात्परिजनं भोज-यन्ति । त्वं पुनः पूर्वं परिजनं भोजयित्वा पश्चादात्मना भुंक्षे । तात वयं पुण्यफलोपजीविन्यः[2] सततमेवास्माकं पर्व । एता कुस्थान-[3] फलोपजीविन्यः[2] कदाचित्कर्हिचिदुदारभोजनं लभन्ते[4] । पुत्रि शोभनमेतदपि गतम् । इदमपरं पृच्छामि । सर्वलोकः शुष्के उपानहौ धारयन्ति । त्वं पुनः उदके । किमेतत् । तात मूर्खो लोकः । उदक एव उपानहौ धारयितव्यौ । यत्कारणं स्थले स्थाणुर्दृश्यते कण्टकः पाषाणशर्करः शुक्तिशकलिका शंखसूके[5] खण्डिका च ।

1 Cf. *Dhammapada-aṭṭhakathā*, I, p. 390.

2 Ms. जीविनाः

3 116a, l. 5: འདི་དག་ནི་ཚོགས་ འབྱུང་བའི་འབྲས་བུ འཚོ་བ་ལགས །

4 Ms. ०चिद्दुराबभासं Ibid. བརྒྱ་ལ་མ་ ན་ལན་འགའ་ རྒྱ་ཆེན་པོ་འཐོབ་པའི་ཕྱིར །

5 Cf. Mvyut. 237, 2-3: शङ्खः ; शुक्तिका

जले त्वेते न दृश्यन्ते। अतो जल एवोपानहौ धारयितव्यौ न स्थले। पुत्रि शोभनमेतदपि गतम्। इदमपरं पृच्छामि। एता दारिका आतपे छत्रं धारयन्ति त्वं पुनरारामे वृक्षच्छायायाम्। काऽत्र युक्तिः। तात मूर्खो लोकः। आराम एव छत्रं धारयितव्यम्। यत्कारणं नित्यमारामः शाखामृगैः पक्षिभिराकीर्णः। पक्षिण उच्चार-प्रस्रावं कुर्वन्ति। अस्थिखण्डं पातयन्ति। शाखामृगा उच्चार-प्रस्रावं कुर्वन्ति। अर्धपरिभुक्तानि फलानि पातयन्ति। चल-[1]स्वभावत्वादितश्चामुतश्च शाखान्तरे संक्रामं कुर्वन्ति। काष्ठ-खण्डानि पातयन्ति। अभ्यवकाशे च तन्नास्ति। कदा-चित्स्यात्तत्तु तु लघुनिपाति[2]। अत आराम एव छत्रं धारयि-तव्यं नाभ्यवकाशे। पुत्रि शोभनमेतदपि गतम्। इदमपरं पृच्छामि। एता दारिका वातवर्षे देवकुलं प्रविष्टास्त्वं पुनरभ्यवकाशे स्थिता। तात अभ्यवकाश एव स्थातव्यम्। न देवकुलं प्रवेष्टव्यम्। पुत्रि काऽत्र युक्तिः। तात एतानि शून्यदेवकुलानि नित्यमेव विटवात[3]-पुत्रधूर्तकैरशून्यानि। यदि मम प्रविष्टाया कश्चिदङ्गप्रत्यङ्गानि परामृशति नत्वेवं मातापित्रोर्मे अयशस्यता[4] भवति। वरमभ्यव-काशे प्राणवियोगः। न त्वेव शून्यदेवकुलप्रवेशः।

1 Ms. सुभाव

2 116b, l. 5: བརྒྱ་ལ་མཆིས་ན་ ཡང་དེ་རེས་འགའ་འབབ་པར་ བས་དེ།

3 117a, l. 1 : ནལ་ཕྲུག=bastard child

4 Ibid. l. 2: མི་སྙན།

ततोऽसौ ब्राह्मणस्तत्प्रचारावर्जित[1]जनितसौमनस्यो बलमित्रस्य गृहपतेर्निवेशनं प्रविश्य कन्याप्रतिलम्भतृष्णया[2] ससंभ्रमः स्वस्ति स्वस्तीत्युवाच। गृहपरिजनः कथयति। ब्राह्मण न तावद्भिक्षावेला। किं प्रार्थयसे। कन्याभिक्षाम्। कस्यार्थाय। श्रावस्त्यां मृगारो नामाग्रामात्यः। तस्य पुत्रो विशाखो नाम। ते कथयन्ति। सदृशमस्माकं तत्कुलम्। किं तर्हि। अतिविप्रकृष्टो देशः। स कथयति। दूर एव दारिका दातव्या। किं कारणम्। यदि तावत्सुखिता भवति श्रुत्वा प्रामोद्यमुत्पादयिष्यति। अथ दुःखिता दानमानसत्कारक्रियया खेदमापद्यतेऽर्थापचयश्च भवति। ते कथयन्ति। यद्येवं दत्ता भवतु। ततो ब्राह्मणः स्वस्तीत्युक्त्वा प्रक्रान्तोऽनुपूर्वेण श्रावस्तीं गतः। मार्गश्रमं प्रतिविनोद्य मृगाराग्रामात्यस्य सकाशं गतः। ततो दारिकाया आहारविहारतां चेष्टां रूपयौवनशोभां वैचक्षण्यं च यथावदाख्याय कथयति। मया महता परिखेदेन नानादिग्देशाधिष्ठानान् पर्यटित्वा[3] सा कृच्छ्रेण प्रतिलब्धा। गच्छेदानीं परिणयेति। ततो मृगारेणाग्रामात्येन दिवसतिथिमुहूर्तनक्षत्रप्रतिग्रहं कृत्वा चम्पामागत्य महता श्रीसमुदयेन विशाखस्य परिणीता।

सा मात्रा गमनदेशकाले शिक्ष्यते। पुत्रि नित्यं त्वया सूर्याचन्द्रमसौ नमस्यौ। अग्निः परिचर्तव्यः। आदर्शो निर्मादयितव्यः[4]। शुक्लानि वासांसि प्रावरितव्यानि। ग्रहीतव्यं न दातव्यम्। वाणी

1 117a, l. 3 : དེའི་ སྤྱོད་ཚུལ་གྱིས་རངས་ཤིང །

2 Ms. प्रतिलम्ब०

3 For पर्यट्य

4 117b, l. 6 : མེ་ལོང་དྲི་མ་ཕྱི་བར་བྱ །

रक्षितव्या। न कस्यचिदुत्थायासनं[1] दातव्यम्। [2]मिष्टं भोक्तव्यम्। सुखं स्वप्तव्यम्। निःश्रेणी[3] बद्धव्येति[4]। ततो मृगारेण श्रुतम्। स संलक्षयति। इयं दारिका मिथ्यादृष्टिर्ग्राह्यते। अहमेनां मिथ्यादर्शने विवेच्य सम्यग्दर्शनं ग्राहयिष्यामीति विदित्वा तामादाय संप्रस्थितः।

ततोऽस्या माता स्नेहव्याकुलहृदया अश्रुव्याकुलेक्षणा कण्ठे परिष्वज्य सस्वरं रुदन्ती कथयति। पुत्रि इदं ते पश्चिमं दर्शनमिति। सा तामनुसंज्ञापयन्ती कथयति। अम्ब पृच्छामि। तावत्किं त्वमत्र जाताहोस्विज् ज्ञातिगृहे। [पुत्रि ज्ञातिगृहे[5]।] तत्तव गृहमाहोस्विदिदम्। इदम्। अहमपीह जाता। तत्र मया वस्तव्यम्। संयोगो नियतं वियोगान्तः। तूष्णींभव। किमर्थं रोदिषि।

ततो मृगारः स्थलेन संप्रस्थितः। विशाखा स्वामिना सार्धं स्वगृहलब्धेन च परिजनेन नौयानेन संप्रस्थिता। तत्र वडवा अचिरप्रसूता नावमधिरोह्यते। किशोरकः स्थले खेदमापत्स्यतीति सा यत्नेनापि नाभिरोहतीति कोलाहलो जातः। विशाखया श्रुतम्। सा कथयति। किमर्थमयं कोलाहल इति। तैर्यथावृत्तमाख्यातम्। विशाखा कथयति। किशोरकं पूर्वमभिरोहयत स्वयमभिरोक्ष्यतीति। तैस्तथा कृतम्। अभिरूढा। ततो मृगारेण ते पृष्टाः। किमर्थं चिरेण यूयमागताः। वडवा

1 Ms. ०दुत्थाय० ; Tib. ལངས་ནས། 2 117b, l. 6 : ཞིམ་པོ།

2 Ms. निश्रेणी ; 117b, l. 6 : ཐེམ་སྐས་གཟུགས་པར་བྱའོ།

4 Cf. *Dhammapada-aṭṭhakathā*, vol. I, p. 398. See *Infra*, p. 68-9.

5 Supplied from Tibetan.

नावं नाभिरोहति। अथ कथमभिरूढा। चाम्पेयिकया उपाय-संविधानमाख्यातं किशोरकं पूर्वमभिरोहयत। पण्डिता चाम्पेयिका।

यावदन्तर्मार्गे सार्था रात्रिं वासमुपगताः। मृगारस्य प्राग्भारे शय्या प्रज्ञप्ता[1]। विशाखा दृष्ट्वा पृच्छति[2]। कस्यैषा शय्या। मृगारस्य। अपनयत। किं कारणम्। यदि सुप्तस्य प्राग्भार उपरि निपतति नियतमवष्टब्धः[3] कालं करोति। मम यावज्जीवमयशस्यम्। ईदृशी दारिका परिणीता यदन्तर्मार्ग एव श्वशुरः कालगतो गृहमपि न संप्राप्त इति। तच्च शयनासनमपनीतं प्राग्भारश्च पतितः। समन्तान्महाजनकायः प्रधावितो गृहपतिरवष्टब्धः इति। गृहपतिः कथयति। भवन्तो मा बिभीत। इहाहं तिष्ठामि। शय्यां प्रत्यवैक्षन्त[4]। अपनीता शय्या। केन। विशाखया। पण्डिता चाम्पेयिका। पुनरपि जीर्णोद्याने वासमुपगताः। मृगारस्य शून्यदेवकुले शय्या प्रज्ञप्ता[1]। विशाखया दृष्टा। पृच्छति। कस्यैषा शय्या। आर्यस्य। अपनयत। किं कारणम्। यदि देवकुलं पतति ततोऽवष्टब्धः कालं करोति। ननु मे पूर्ववद्-यशस्यम्। सा चापनीता। देवकुलं च पतितम्। महाजनकायो प्रधावितः पूर्ववद्यावत्पण्डिता चाम्पेयिका।

यावदनुपूर्वेण श्रावस्तीमनुप्राप्ता। मार्गश्रमे प्रतिविनोदिते सुहृत्संबन्धिबान्धवजने च प्रेषिते[5] विशाखा स्वकुलानुरूपं गृहे

1 Ms. प्राज्ञप्ता 2 Ms. प्रच्छति

3 118b, l. 4 : གནོད་མི་ཟ་བར་ནོན་པས ।=undoubtedly pressed

4 Ms. प्रत्यवीक्षतः 5 119a, l. 3 : སྤྲུས་ནས ।=separated

कर्म कार्यते। मृगारस्य षट् स्नुषा वारेण वारं गृहजनस्य भक्तं सम्पादयन्ति। विशाखापि तथैव नियुक्ता। त्वयापि सप्तमे दिवसे वारः कर्तव्य इति। तस्या[1] वार आगमिष्यतीति। ये श्वशुरश्वश्रूस्वामिनां गन्धा[2] अवशिष्यन्ते चर्पटिकां[3] कृत्वा प्रतिदिवसं शोषयति[4]। यान् सक्तून् प्रतिदिनं लभते ततः प्रस्थानि[5] विशाखा अपनीय स्थापयति[6]। परिशिष्टं घृतेन मोदयति तत्प्रमाणा एव भवन्ति। मद्यपानागतस्तु[7] श्वो वारो भविष्यतीति। यत् स्वामिनो निर्माल्यमात्मनश्च तच्छीतले स्थापितम्। यावत्प्रभातायां रजन्यां कर्मकराणामामलकं दत्तं गन्धः पुष्पाणि भोजनं मद्यं च। ते परितुष्टाश्चिरेण वयं पुराण-गृहपतिपत्न्या अवलोकिता इति। तैस्तस्मिन्दिवसे द्विगुणं कर्म कृतम्। यावन्मृगारः कालवेलायां [8]कर्मान्तानवलोकयन्पश्यति प्रभूतं कर्म कृतम्। स पृच्छति। किं युस्माभिरपरे भृतकपुरुषा गृहीताः। न। केनचित् कोऽत्र योगो येनाद्य द्विगुणं कर्म कृतम्। ते कथयन्ति। आर्या यादृशं भक्तं तादृशं कर्म। किमेतत्। तैर्यथा-वृत्तं विस्तरेण समाख्यातम्। मृगारपुत्रैः स्वकस्वकानां पत्न्यः[9]

1 Ms. तया	2 Ms. गत्वा ; 119a, l. 5: དྲི་ལྷག་མ།

3 Ibid. རི་ཕུར་བྱས་ནས།	4 Ms. श्रोष्यन्ति ; 119a, l. 6: སྐམས་སོ།

5 Ms. प्रस्थानां 119a, l. 6 : བྲེ་ཁ་བྲི་སྟེ་བཞག་ལ།	6 Ms. स्थापयिति

7 Ms. मद्यमनागतमः सुतं श्वो 119a, l. 7: ཆང་བཏུང་ལ་རིག་པར་བྱ་བ་དང་།

8 Ms. मृगारेण	9 Ms. पत्नीमारोच्चितम्

आरोचिताः। ताः कथयन्ति। वयमपि गृहादपहृत्य भृतकपुरुषाणां प्रियं कुर्याम। वयमप्यार्यस्य युष्माकं भृतकपुरुषाणां च प्रिया भवेम यथा विशाखया कृतम्। ततो मृगारेण विशाखा पृष्टा। पुत्रि कथं त्वया भक्तं प्रतिजागरितम्। तया विस्तरेण समाख्यातम्। •मृगारस्तुष्टः। तेन सैव गृहव्यापारे नियुक्ता। अन्तर्जनश्च सर्वोऽभिहितः। यो युष्माकं विशाखया दत्तेन परितुष्यति तेन स्थातव्यमानुकूल्येन वा चरितव्यं यावदसौ गृहस्वामिनी संवृत्ता। साचारविहारतया सौरत्येन च सर्वमन्तर्जनं तोषयति। यावदपरेण समयेन विशाखाया गृहस्योपरिष्टाद् हंसा[1] उत्तरकुरुद्वीपादकृष्टोप्तं तण्डुलफलशालिमादाय संप्रस्थिताः। राज्ञश्च गृहे हंसस्तिष्ठति। तेन तान् दृष्टा कूजितम्। तैरपि समयोनि[2]-विश्वासोद्वेगमसहमानैः कूजितम्। राज्ञश्चरणकोष्ठे शालिबल्लयो निपतिताः[3]। ततो राज्ञोऽमात्यानामेकैका दत्ता। मृगारेण स्वप्रत्यंशो विशाखाया दत्तः। तया समुद्गके स्थापयित्वा कार्षिकाणां आज्ञा दत्ता। तेऽपि सुतरां[4] परितुष्टाः। तैः क्षेत्रस्तोकं सुपरिकर्षीकृत्य कालं ज्ञात्वा उप्तः। देवः कालवर्षी संवृत्तः। बीजानुरूपा संपत्तिर्जाता। अपरस्मिन्वर्षे प्रभूतं संपन्नमपरस्मिन्नपि वर्षे प्रभूत-

1 Ms छन्धं सा ; 120a, l. 2: སྔོང་ནས་ ངང་པ་རྣམས་ཀྱིས །

2 120a, l. 3-4: དེ་ རྣམས་ ཀྱིས་ཀྱང་སྐྱེ་གནས་འཕྲུན་པའི་ བཙུགས་པས་མནགས་མ་ཐུབ་སྟེ་སྐད་ཕྱུང་བ་དང །

3 Ibid., l. 4: རྒྱལ་པོའི་ཁབ་ཀྱི་ཁང་དོག་དུ་འབྲས་ཀྱི་སྙེ་མ་རྣམས་ལྷུང་བར་གྱུར་ཏོ །

4 Tib. omits it.

तरम्। एवं यावत् सर्वाणि कोष्ठागाराणि हंसाहृतकुशूलैः[1] परिपूर्णानि। यावद्राज्ञः प्रसेनजितः कोसलस्य ग्लान्यमुत्पन्नम्। तेन वैद्या आहूय पृष्टाः। ते कथयन्ति। देव यदि हंसाहृतशालिः संपद्यते तेन मण्डं साधयितुमर्हसि। पीत्वा स्वस्थो भविष्यसीति। राज्ञा अमात्या आहूय पृष्टाः। भवन्तो मया युष्माकं हंसाहृतानि शालिशीर्षाणि दत्तानि। तानि युष्माभिः किं कृतानि। तत्र केचित् कथयन्ति। देव अस्माभिर्देवकुले दत्तानीति। अपरे कथयन्ति। अस्माभिरग्नौ प्रक्षिप्तानि इति। अपरे कथयन्ति अस्माभिर्द्वारशालायां बद्धानीति[2]। मृगारः कथयति। देव मया विशाखाया दत्तानि। पृच्छामि तावत्तया किं कृतानीति। तेन विशाखा पृष्टा। सा कथयति। तात किं हंसाहृतशालिना प्रयोजनम्। राज्ञो ग्लान्यमुत्पन्नम्। वैद्यैर्हंसाहृता शालिर्व्यपदिष्टा। ततो विशाखया सौवर्णं भाजनं हंसाहृतस्य तण्डुलस्य [मण्डेन][3] पूरयित्वा राज्ञः प्रेषितम्। राज्ञा परिभुक्तम्। स्वस्थीभूतः।

अपरेण समयेन जानपदैः राज्ञे बडवाद्वयं प्रेषितम्। माता च दुहिता च। तत्र न कश्चिज्जानीते कतरा माता कतरा दुहिता इति। राज्ञा अमात्यानामाज्ञा दत्ता। भवन्तः सुविचारितं कृत्वा मम निवेदयत इति। अमात्याः सकलदिवसं विचारयन्तः खिन्नाः। न निर्लोडितम्[4]। मृगारश्चिरकाले[5] गृहं गतः। विशाखा

1 Ms. ०हृतकशालैः

2 120b, l. 4: སྒོ་གང་དུ་བདགསོ།

3 120b, l. 6: འབྲས་ཀྱིས་བཀང་ནས།

4 121a, l. 2: གདན་ལ་མ་ཕབསོ། =failed to decide

5 Ms. चिकाले

पादयोर्निपत्य कथयति। तात किमद्य चिरेणागतः। तेन यथावृत्तं विस्तरेण समाख्यातम्। विशाखा कथयति। तात किमल ज्ञातव्यम्। ताभ्यां[1] योग्याशनं समं देयम्। या दुहिता सा शीघ्रं भक्षयित्वा मातुः प्रत्यंशं भक्षयिष्यति। या माता अपरिपन्थिनी[2] मुखं निक्षिप्य स्थास्यति। एतच्चिह्नमिति। मृगारेण अमात्यानां निवेदितम्। तैरपि यथा समादिष्टा परीक्षा कृता। ततः प्रभातायां रजन्यां राज्ञे निवेदितम्। देव इयं माता इयं दुहिता इति। राजा कथयति। कथं युष्माभिः परिज्ञातम्। देव एवं चैवं च। ह्यस्तनिके न[3] परिज्ञातम्। देव का शक्तिरस्माकं परिज्ञातुम्। विशाखया एवं संदिष्टम्। राजा कथयति। पण्डिता चाम्पेयिकेति।

अन्यतमः पुरुषस्तीर्थे कम्बलं[4] स्थापयित्वा स्नाति। अन्यतमश्च-पुरुष आगतः। स तेन कम्बलेन शिरो वेष्टयित्वा तत्रैव स्नातुमारब्धः। स पुरुषः स्नात्वोत्थितो न पश्यति कम्बलम्। पुरुषः कथयति। भोः पुरुष किं समन्वेषसे। कम्बलम्। कुतस्तव कम्बलम्। स्याद् यथाहं शिरो वेष्टयित्वावतीर्णस्तथा त्वमप्यवतीर्णः स्या इति। स कथयति। एष एवासौ मदीयः कम्बलः। त्वदीयो मदीय इति तयोर्विवादो जातः। तौ राज्ञः सकाशं गतौ। राज्ञा अमात्यानामाज्ञा दत्ता। भवन्तः परीक्षित्वा यस्य सन्तकस्तस्यानुप्रयच्छत

1 Ms. तस्यां

2 121a, l. 4: མི་འཚོལ་བར། =not seeking

3 121a, l. 6: ཁར་ཙང་ཅི་སྟེ་མ་ཤེས།

4 Ms. कम्बलां

इति। ते परीक्षितुमारब्धाः। एकः पृष्टः। स कथयति मदीय इति। अपरः पृष्टः। स कथयति मदीय इति। त्वदीयो मदीय इति दिवसोऽतिक्रान्तः। अमात्याः खिन्नाश्चिरकाले अनिर्लोडयित्वैव गृहं गताः। विशाखया मृगारः पूर्ववत्पृष्टः। तेन यथावृत्तमारोचितम्। विशाखा कथयति। तात किमत्र ज्ञातव्यम्। तौ वक्तव्यौ। एकोऽपि अर्धं गृह्णात्वपरोऽप्यर्धमिति। यस्य सन्तकः स वक्ष्यति। किमर्थं मदीयः कम्बलश्छिद्यते इति। यस्य न सन्तकः स संलक्षयिष्यत्यर्धमपि तावन्मे भवतु। कोऽत्र मम व्यय[1] इत्येषात्र परीक्षा इति। मृगारेण गत्वा अमात्यानां निवेदितम्। देव पूर्ववद्यावद् राजा कथयति। पण्डिता चाम्पेयिकेति।

राज्ञो यानपालकेण[2] वणिजा चन्दनगण्डीरकः[3] प्रावृतोऽनुप्रेषितः। तस्य न विज्ञायते कतरदग्रं कतरन्मूलमिति। राजा अमात्यानामाज्ञा दत्ता। विचारयथ इति। तैः कृत्स्नं दिवसं विचारितम्। न परिज्ञातम्। चिरकाले गृहं गताः। विशाखया पूर्ववद्यावन्मृगारः पृष्टः। तेन यथावृत्तं विस्तरेण समाख्यातम्। विशाखा कथयति। तात किमत्र ज्ञातव्यम्। उदके प्रक्षेप्तव्यः। यन्मूलं तदधस्ताद् भवति। यदग्रं तदुपरिष्टाद् भवति। एषा तत्र परीक्षेति। मृगारेण अमात्यानां निवेदितम्। पूर्ववद्यावद् राजा कथयति। पण्डिता चाम्पेयिकेति।

1 122a, l. 1 : གོད་སྐམ་སྐྱེ །

2 122a, l. 2 : གྲུ་པས །     3 *Ibid.* སྤང་དུམ་ཞིག །

अन्यतमस्मिन् कर्वटके गृहपतिः। तेन सदृशात्कुलात् कलत्रमानीतम्। तस्य न पुत्रो न दुहिता। तेन पुत्राभिनन्दिना द्वितीया पत्नी आनीता। तस्याः प्रथमपत्न्या ईर्षाप्रकृत्या योनिविनाशनप्रयोगो दत्तः। तस्याः सुतरां योनिर्विशुद्धा आपन्नसत्त्वा संवृत्ता। यावन्नवानां मासानामत्ययात् प्रसूता। दारको जातः। सा संलक्षयति। प्रतिकृष्टमेतद् वैराणां यदुत सापत्नकम्। नियतमेनमपरा माता येन वा तेन वोपायेन घातयति। किं मम स्वामी करिष्यति। किं वा अहम्। कियन्तं च कालं रक्षितव्यः। सर्वथा अस्या एव दातव्य इति तया स्वामिना सह संप्रधार्य लब्धानुज्ञया सा प्रथमपत्नी उक्ता। भगिनि तवैवैष पुत्रो दत्तो मया। संवर्धय एनमिति। सा संलक्षयति। यस्याः पुत्रस्तस्या[1] गृहम्। संवर्धयामि। गृहस्वामिनी भविष्यामीति। स तया संबर्धितः। पिता चास्य कालगतः। तयोर्गृहनिमित्तं विवादो जातः। एका कथयति। ममैष पुत्रो द्वितीया कथयति ममैष पुत्र इति। ते राज्ञः सकाशं गते[2]। राज्ञा अमात्यानामाज्ञा दत्ता। गच्छत भवन्तो विचारयथेति। तेषां विचारयतां दिवसोऽतिक्रान्तो न निर्लोडितम्। चिरकाले गृहं गताः। विशाखा मृगारं पृच्छति। पूर्ववद्यावत्किमत्र ज्ञातव्यम्। ते वक्तव्ये न वयं जानीमः कस्य पुत्र इति या युवयोर्बलवती सा गृहीत्वा गच्छतु। ते बाहुद्वयेन गृहीत्वा आकर्ष्यतः[3]। स दुःख्यमानो

1 Ms. यस्या पुत्रस्या ; 122 b. 1. 5: དེས་བསམས་པ་ཁྱོད་ནི་གང་ལ་བུ་ཡོད་པ་དེ་ཁོ་ནའི་ཡིན་པར་ཟེར་བས། 2 Ms. गताः 3 Ms. आकृष्यत

रोदिष्यति। यास्य माता सा सानुनया प्रतिमोक्ष्यति। जीवन्तमपि तावदेनं द्रक्षामीति[1]। सान्या निर्दया न प्रतिमोक्ष्यति। यदा कषाभिस्ताडिता भवति तदा यथाभूतं करिष्यति। इयमत्र परीक्षेति। मृगारेणामात्यानामेवं निवेदितम्। पूर्ववद्यावद्राजा कथयति। पण्डिता चाम्पेयिकेति।

अथापरेण समयेन मृगारो ग्लानिपतितः। तस्य वैद्य एकं दिवसं भैषज्यं ददाति पुनर्ग्लानो भवति। विशाखा संलक्षयति। किमर्थं तात एकस्मिन् दिवसे स्वस्थो भवति द्वितीये दिवसे पुनर्ग्लानो भवति। यैर्भैषज्यैः स्वस्थो भवति तानि निमित्तीकृतानि। ततस्तया वैद्यानां द्वारं धारयित्वा[2] स्वयमेव चिकित्सा कृता। स्वस्थीभूतः। मृगारः संलक्षयति। कोऽत्र योगो येनाहमेकस्मिन्दिवसे स्वस्थो भवाम्येकस्मिन् ग्लानः। यदा वैद्यो न प्रविशति तदा नित्यमेव स्वस्थ इति। तेन विशाखा पृष्टा। पूर्ववद्यावत् पण्डिता चाम्पेयिका।

राज्ञः प्रसेनजितः कोसलस्य श्रीवर्धनो नाम हस्तिविश्वासिकः[3]। सोऽपरेण समयेन राज्ञा अवसादितः[4]। विशाखया श्रुतम्। तया मृगार उक्तः। तात सर्वेषाममात्यानामन्त्यमवसादनम्[5]। अर्हसि श्रीवर्धनस्य देवं क्षमयितुम्। स कथयति। पुत्रि क्षमयामि। ततस्तेन राजाभिहितः। देव श्रीवर्धनो देवस्य भक्तः। क्षम्यता-

1 Ms. द्दक्षामीति  2 123b, l. 1: དེ་སྨན་པ་རྣམས་བསྒྲོ་ནས་སྨར་ལོག་ནས། 3 123b, l. 4: གླང་པོ་ཆེའི་སྣ། 4 Ibid. གཤེ་བར་གྱུར་ཏེ། 5 Ms. गन्त्या for अन्त्यम्; 123b, l. 5: མཐར་གྱིས་བཀའ་འབབ་པར་འགྱུར་གྱིས།

मस्येति। राजा कथयति। क्षान्तम्। देव यदि क्षान्तं तान्यस्य वृत्तिपदानि दीयन्ताम्। एवं भवतु। दत्तानि। श्रीवर्धनेन विज्ञातं यथा विशाखया मम राजा क्षमापित इति। स तस्याः प्रत्युपकारबुद्ध्या स्थितः। अपरेण समयेन मृगारस्य पुरुषव्याधिरुत्पन्नः। विशाखा अस्योपस्थानं करोति। स जिह्रेति। सा कथयति। तात किमर्थं जिह्रेषि। किं न दुहिता पितुरुपस्थानं करोति। तथाप्यसौ जिह्रेति। सा संलक्षयति। नायं ममान्तिकादुपस्थानं स्वीकरोति। दारसंग्रहमस्य करोमीति। सा श्रीवर्धनस्य गृहं गता। तेन स्वागतवादेन समुदाचरित्वा आसनं दत्तम्। निषण्णा श्रीवर्धनस्य दुहिता। सा तेनोक्ता। दारिके विशाखापादयोः गृहाणेति। विशाखा कथयति स्थानमेतद्विद्यते यन्मयैवैषा पादयोर्गृहीतव्या भवतीत्युक्त्वा कथयति। स्वस्ति सुते इति। श्रीबर्धनः कथयति। किं प्रार्थयसे। कन्याभिक्षाम्। कस्यार्थाय। सा कथयति। तातस्य। स तूष्णीमवस्थितः। श्रीबर्धनस्य पत्नी कथयति। वृद्धः। कथं तस्य दीयत इति। विशाखा कथयति। धनयौवने हि पुरुषाः। किं विचारेण दीयतामिति। श्रीबर्धनः कथयति। भद्रे अस्माकं विशाखोपकारिणी। दीयताम्। यद्येवं दत्ता भवतु। ततो मृगारेण महता श्रीसमुदयेन परिणीता। सा तस्योपस्थानं कर्तुं प्रवृत्ता। विशाखा न तथा।

मृगारः कथयति। पुत्रि वाचमनुप्रयच्छेति। सा कथयति। तात मा किञ्चित्परिहीयते[1]। पुत्रि यस्त्वं माता

1 124b, l. 1: ཇོ་བོ་ཅུང་ཟད་ཉམས་པར་མ་གྱུར་དམ །

शिक्षिता तन्न किञ्चित्समादाय वर्तसे। तात सर्वं समादाय वर्ते। यत् कथयति सूर्याचन्द्रमसौ नमस्याविति। दारिकायाः सूर्याचन्द्रमसःस्थानीयौ श्वश्रूश्वशुरौ। तानहं नमस्यामि। यत् कथयति अग्निः परिचर्तव्य इति। स्त्रिया भर्ताग्नि[1]-स्थानीयः। भर्तुरासन्नया भवितव्यम्। नातिदूरस्थया। साहं स्वामिनमग्निवत्परिचरामि। यत्कथयत्यादर्शो निर्मादयितव्य इति। तद्गृहमादर्शस्थानीयं नित्यमुपलेप्तव्यं संमार्ष्टव्यं च। तदहं गृहसंस्कारमनुदिवसं करोम्येव। यत्कथयति शुक्लानि वासांसि प्रावरितव्यानीति। अन्यैर्वस्त्रैर्गृहपरिकर्म कर्तव्यम्। शुक्लानि वस्त्राणि प्रावृत्य देवशुश्रूषा कर्तव्या स्वामिसंस्कारं[2] चोपसंक्रम्यमिति। एतदप्यहं करोम्येव। यत्कथयति ग्रहीतव्यं न दातव्यमिति। किं ग्रहीतव्यम्। लोकसकाशाद् दुरुक्तवचनानि। न च किञ्चिद्दुरुक्तं वचनीयम्। एतदप्यहं समादाय वर्ते। यत्कथयति वाणी रक्षितव्येति। गुह्यवचनं न प्रकटीकर्तव्यम्। तन्मे वाक्-संयमोऽस्त्येव। यत्कथयति न कस्यचिदुत्थायासनं दातव्यमिति। एवं कथयति। त्वं कुलवधू त्वया प्रतिगुप्ते स्थाने निषेत्तव्यम्। साहं प्रतिगुप्त एव निषीदामि[3]। यत्कथयति मृष्टं[4] भोक्तव्य-मिति। सुबुभुक्षितया भोक्तव्यमिति। साहं नित्यं गृहजने भुक्ते बुभुक्षिता च भुंजे। यत्कथयति सुखं शयितव्यमिति। सर्वं गृह-कार्यं कृत्वा रात्रौ भाण्डं प्रतिशाम्य शय्या ते कल्पयितव्या यथा

1 Ms. भर्तारमग्नि-

2 125a, l. 1: ཁྱིམ་ཐབ་ཀྱི་དྲུང་དུ་མཆི་བ་ནི།

3 Ms. निषेद्यामि

4 125a, l. 5: ཞིམ་པོ།

न पुनरुत्तिष्ठसि इदं सुनिहितमिदं दुर्निहितमिति। तदहमेवमेव करोमि। यत्कथयति निःश्रेणी बद्धव्येति। एवं कथयति। त्वं पूर्वकैर्दशभिः कर्मपथैः समन्वागता येन देवगतिं प्राप्य इह मनुष्यलोके उपपन्ना। तदियं कर्मभूमिः। इहापि त्वया दानानि दातव्यानि पुण्यानि कर्तव्यानि पापं न करणीयम्। एषापि पुण्यमयी निःश्रेणी स्वर्गसोपानभूतेति। एतदप्यहं शक्त्या संपादयामि। साधु साधु विशाखे। पण्डिता तव माता। त्वं तु पण्डिततरा यया मातुः सन्धाय भाषितं विज्ञातम्[1]।

अथ मृगारस्यैतदभवत्। यदि भगवाननुजानीयादहं विशाखां मातरं घोषयेयमिति विदित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमिदमवोचत्। लभ्यं भदन्त स्नुषां मातरं घोषयितुमिति। भगवानाह। स चेत्पञ्चभिर्धर्मैः समन्वागतो भवति। कतमैः पञ्चभिः। ग्लानमुपतिष्ठति। प्रतिरूपेषु दारेषु प्रतिष्ठापयति। जीवितेनाच्छादयति। धनं रक्षति। प्रज्ञया च संविधानं करोति।

अन्तरोद्दानम्।

ग्लानोपस्थानं दारा च जीवितस्य धनस्य च।
प्रज्ञया उपसंहर्षी पञ्चैता मातरः स्मृताः॥

अथ मृगारो येन राजा प्रसेनजित्कोसलस्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं प्रसेनजितं कोसलमिदमवोचत्। इच्छाम्यहं

1 Tib. ends here a section (125b, l. 4): འདུལ་བ་གཞི། བམ་པོ་དྲུག་ཅུ་གསུམ་པ། See above pp. 22, 45.

देव विशाखां मातरमुद्घोषयितुम्। राजा कथयति। ममापि विशाखयोपस्थानं कृतमहमप्यार्यकां पृष्ट्वा तां भगिनीमुद्घोषयामि। तेनार्यका पृष्टा। सा कथयति। उद्घोषय मा वा। भगिन्येवासौ[1]। कथं कृत्वा। पुरानु[2] ब्रह्मदत्तोऽस्य प्रेष्यदारिकया सार्धं संवासं गतः। तस्याः पुत्रो जातः। तस्य बलमित्र इति नाम कृतम्। स वृद्धराजेन कस्मिंश्चिदेवाधिकरणे प्रवासितः। चम्पां गत्वावस्थितः। तस्यासौ दुहिता। तव भगिनी भवति। ततो राज्ञा हस्तिस्कन्धे आरोप्य उद्घोषिता। इयं विशाखा मृगारस्य [माता।] महाराजस्य[3] प्रसेनजितो भगिनीति। तया पूर्वारामे विहारं कारयित्वा [4]चातुर्दिशाय भिक्षुसंघाय निर्यातितम्।—तथा स्थविरैरपि सूत्रान्त उपनिबद्धम्। भगवान् श्रावस्त्यां विहरति पूर्वारामे मृगारमातुः प्रासाद इति[5]।

अपरेण समयेन विशाखा द्वात्रिंशदण्डानि[6] प्रसूता। मृगारः श्रुत्वा करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। जनपदकल्याणी कीदृशोऽनर्थः प्रादुर्भूत इति। मृगारस्तानि च्छोरयितुमारब्धः। विशाखा कथयति। तात मा च्छोरय[7]। भगवतस्तावदारोचयेति। तेन भगवत आरोचितम्। भगवानाह। मा च्छोरयेति[7]। तद्द्वात्रिं-

1 126a, l. 5: སྲིང་མོ་ཁོ་ན་ཡིན་ནོ།

2 Ms. अरानु; 126a, l. 5: སྔོན་དུ་འབྱུར།

3 Ms. महाराज्ञः

4 Ms. चान्तर्दिशाय

5 See above, p. 9

6 Ms. ०दराडाः

7 Ms. च्छोरयत

शत्पुटं कच्छपुटं[1] कारयित्वा कुलस्योपरि एकैकमण्डं प्रत्येकं पुटेषु स्थापयेति[2] । विशाखां च वद । त्रिष्कालं[3] पाणिना परामृष । सप्तमे दिवसे स्फुटिष्यन्ति । द्वात्रिंशत्कुमारा भविष्यन्तीति । तेन तथा कृतम् । सप्तमे दिवसे स्फुटितानि । द्वात्रिंशत्कुमारा जाताः । उन्नीता वर्धिता महान्तः संवृत्ता व्याडविक्रान्ताः । अपरेण समयेन ते रथाभिरूढा बहिर्निर्गताः प्रविशन्ति । पुरोहितपुत्रश्च रथाभिरूढो निर्गच्छति । यावदन्योन्यधुरातुण्डो लग्नः । पुरोहितपुत्रः कथयति । अपनयतेति । तेऽपि कथयन्ति । त्वमेवापनयेति । पुरोहितपुत्रोऽहमिति परुषं वक्तुमारब्धः । ततो विशाखापुत्रैः धुरातुण्डकेन गृहीत्वा क्षिप्तः । संकारकूटे[4] पतितः । स भस्मावगुण्ठितशिराः पितुः सकाशं गतः । अश्रुपर्याकुलेक्षणः कथयति । तात विशाखापुत्रैर्मम ईदृशी समवस्था कृतेति । पुत्र किमर्थम् । तेन विस्तरेण समाख्यातम् । स कथयति । पुत्र यद्येवं क्रमघात्यास्ते । मा शोकं कुरु । उपायसंविधानं करिष्यामि । स तेषां रन्ध्रान्वेषणतत्परो व्यवस्थितः । अपरेण समयेन राज्ञः प्रसेनजितः कोसलस्य कार्वटिको विरुद्धः । तस्य राज्ञा एकं दण्डस्थानं[5] प्रेषितम् । हतप्रहतमागतम् । एवं यावत्सप्तदण्डस्थानानि हतप्रत्याहतानि[6] । राजा स्वयमेव चतुरङ्गेण बलकायेन निर्गच्छति ।

1 126b, l. 5: ཤིང་བལ་གྱིས་ཁོང་སྟེ | Cf. Mvyut. 272. 71.

2 Ms. स्थापयति

3 Ms. तृष्कालं

4 127a, l. 4: ཕྱག་དར་གྱི་ཕུང་པོ།

5 127a, l. 7: དམག་ཁ་ཆེན |=army

6 127b, l. 1: རབ་ཏུ་རྡགས |

विशाखापुत्राश्च प्रविशन्ति। तैरसौ दृष्ट उक्तश्च। देवः संप्रस्थित कार्वटिकां सन्नामयितुमिति। तिष्ठतु देव। वयं गच्छामः। एवं कुरुथेति। तेन तेषां चतुरङ्गो बलकायो दत्तस्तैर्गत्वासौ कार्वटिकः सन्नामितः। वन्दिग्रहकरप्रात्यायांश्च गृहीत्वा आगताः। पुरोहितः कथयति। देव एते अतीव विक्रान्ताः। [1]यद्देवस्य कृच्छ्रसाध्यं तदेषामल्पसाध्यम्। देवेनैतच्चिन्तनीयमिति। काकशंकिनो हि राजानः। [तत्] हृदि कृत्वा व्यवस्थितः। पुनः पुरोहितं पृच्छति। कथमत्र प्रतिपत्तव्यम्। स कथयति। देव किमत्र प्रतिपत्तव्यम्। यद्येषामभिरुचितं देवं राज्याच्च्यावयित्वा स्वयमेव राज्यं कारयन्ति। राजा सुतरां खिन्नः[2] संलक्षयति। स्यादेवम्। कथं घातयितव्य इत्युपायसंविधानं चिन्तयति। न कंचित्पृच्छति। मा मन्त्रस्रावो[3] भविष्यतीति स्वयमेवास्य विचारयतो बुद्धिरुत्पन्ना। इहैवोपनिमन्त्र्य घातयितव्या इति। तेन विशाखाया सन्दिष्टम्। भागिनेयैश्च इह भोक्तव्यमिति। सा संलक्षयति। श्वो दारका मातुलस्य सकाशे भोक्ष्यन्ते। अहमपि बुद्धप्रमुखं भिक्षुसंघं भोजयामीति विदित्वा येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णा। एकान्तनिषण्णां विशाखां मृगारमातरं भगवान्धर्म्यया कथया पूर्ववद्यावत्संप्रहर्ष्य तूष्णीं[भूतः]। अथ विशाखा मृगारमाता उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्त-

1 Ms. च देवस्य

2 Ms. भिन्नः 127b, l. 6: རྒྱལ་པོ་ཇི་མི་དགའ་ནས་བསམས་པ །

3 Ms. यत्रस्रावो ; 127b, l. 7: གསང་འཕེལ་དུ་དོགས་པསྲུ་ལ །

मिदमवोचत् । अधिवासयतु मे भगवान् पूर्ववद्यावत्पुरस्ताद्भिक्षु-संघस्य । प्रज्ञप्त एवासने निषण्णा । तेषां च राज्ञः सकाशाद् दूत आगतः। दारका आगच्छन्त्विति। ततो राज्ञा हालाहलेन विषेण च सहयोगेन[1] विह्वलीकृताः। शिरांसि छिन्नानि । ततः पेडां पूरयित्वा ज्येष्ठपुत्रस्य शिर उपरि दत्त्वा जतुमुद्रया लक्षयित्वा विशाखायाः प्रेषिताः । विशाखा संलक्षयति । नूनं देवेन भागिनेयानामाच्छादनं प्रेषितम् । अहमपि बुद्धप्रमुखं भिक्षुसंघमाच्छादयामीति । ततः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसंघं विदित्वा शुचिना प्रणीतेन खादनीयभोजनीयेन पूर्ववद्यावद् भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं पेडामुद्घाटयितुमारब्धा । भगवान् संलक्षयति । सचेद्विशाखा अदृष्टसत्या पुत्रवधं द्रक्ष्यति स्थानमेतद्विद्यते यत्सत्यानामभाजनीभविष्यतीति विदित्वा विशाखामाह । निषीद तावद्धर्मं शृणु। पश्चाद्यथाभिप्रेतं करिष्यसीति । सा भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णा धर्मश्रवणाय । ततो भगवता तस्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा पूर्ववद्यावत् सत्यदर्शनं कृतम् । ततो दृष्टसत्या सा[2] पेडामुद्घाटित्वा पश्यति पुत्रशिरांसि । ततः कथयति । भगवन् एवमनित्याः सर्वसंस्कारा इति । तत्र भगवान्भिक्षूनामन्त्रयते स्म । हं भो[3] भिक्षवो राजा प्रसेनजित्कोसलो येन विशाखायाः पुत्राः प्रघातिताः । ते चेन्न

1 Ms. सह हीयेन

2 Ms. या

3 Ms. त्तुणो

प्रघातिताः स्युः। एभिरेव सहायैः कृत्स्ना तेन वसुमती करतले स्थापिता स्यादिति।

अथ राजा प्रसेनजित्कोसलो रजसावचूर्णितगात्रो[1] येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं राजानं प्रसेनजितं कोसलं भगवानिदमवोचत्। कुतस्त्वं [2]महाराजैतर्ह्यागच्छसि रजसावचूर्णितगात्रः। यानि तानि भदन्त राज्ञां क्षत्रियाणां मूर्धाभिषिक्तानां[3] जनपदैश्वर्यस्था[म][4]वीर्यमनुप्राप्तानां महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां पृथग्भवन्ति राजकृत्यानि राजकरणीयानि तान्यहं कृत्वा परिप्राप्य[5] एतर्ह्यागच्छामि रजसावचूर्णितगात्रः। तेन हि महाराज त्वामेव प्रक्ष्यामि। यथा ते क्षमते तथैनं व्याकुरु। तद्यथा महाराज इह ते पूर्वस्यां दिशि पुरुष आगच्छेच्छ्रद्धितः प्रत्ययितः स्थेय अविसंवादितो लोकस्य[6]। स एवं वदेत्। ततोऽहं तवैतर्ह्यागच्छामि पूर्वस्यां दिशि। सोऽहं तत्राप्राक्षम्। महाशैलं पर्वतमखण्डमच्छिद्रमसुषिरं सुसंवृत्तमेकघनं यावच्च पृथिवी यावच्च नभोऽन्तान्तरे सर्वान्सत्त्वान्सर्वान्प्राणिनः सर्वाणि भूतानि सर्वं च तृणकाष्ठशाखा-

1 129a, l. 6: རྡུལ་གྱིས་ཨོག་ཅིང།

2 Ms. महाराजोत०

3 Ms. पूर्वाभिच्युतानां

4 129b, l. 1: མཐུ་དང།

5 129b, l. 2: ཡོངས་སུ་རྫོགས་ནས།=परिपूर्य

6 129b, l. 3: ཡིད་མི་ཆེས་པ་ཡིད་བརྟན་དུ་རུང་བ་བརྟན་པ་ འཇིག་རྟེན་ལ་མ་སླུ་བ་ཞིག་འོངས་ནས།

पर्णशादमभिनिष्पेषयन्नागच्छति[1] । यत्ते देव कृत्यं वा करणीयं वा तत्कुरुष्वेति। एवं दक्षिणस्यां पश्चिमायामुत्तरस्यां दिशि पुरुष आगच्छेत् । पूर्ववद्यत्कृत्यं वा करणीयं वा तत्कुरुष्वेति। एवं भूपते महाराज महति महाभये प्रत्युपस्थिते दारुणे पुरुषसंक्षये दुर्लभे मनुष्यप्रतिलंभे किं स्यात्करणीयम्। एवं रूपे मे भदन्त महति महाभये प्रत्युपस्थिते दारुणे पुरुषसंक्षये दुर्लभे मनुष्यप्रतिलम्भे किं स्यात्करणीयं नान्यत्रार्थचर्यायां धर्मचर्यायां पुण्यचर्यायां कुशलचर्यायां कल्याणच्चर्यायां बुद्धानां च शासने योगमापत्तुम्। कस्मात्त्वं महाराज एवं वदसि । एवं रूपे मे महति महाभये पूर्ववद्यावत्बुद्धानां शासने योगमापत्तुमिति । यानि तानि भदन्त राज्ञां क्षत्रियाणां मूर्धाभिषिक्तानां जनपदैश्वर्यस्था[म]वीर्यमनुप्राप्तानां[2] महान्तं पृथिवीमण्डलमभिनिर्जित्याध्यावसतां पृथग्भवन्ति हस्तिभिर्हस्तियुद्धान्यश्वैरश्वयुद्धानि रथैरथयुद्धानि पत्तिभिः पत्तियुद्धानि [3]मन्त्रैर्मन्त्रयुद्धानि धनैर्धनयुद्धानि[4] । तानि तेषां तस्मिन्समये [5]अस्थामान्यबलान्यपराक्रमाणि युद्धाय । तस्मादहमेवं वदामि। एवं रूपे मे भदन्त महति महाभये प्रत्युपस्थिते पूर्ववद्यावद्बुद्धानां

1 129b, l. 5-6: རྩྭ་དང་། ཤིང་དང་། ཡལ་ག་དང། ལོ་མ་དང་། འདབ་མ་ཧཻ་སྐྱེད་པ་ཐམས་ཅད་ཕྱེ་མར་བརློག་ཅིང་མཆི་བ་མཐོང་གིས་།

2 Tib. omits जनपदैश्वर्यस्थामवीर्यानुप्राप्तानां

3 Ms. मर्त्य ; 130a, l. 7: གསང་ཚིག་མཁན་རྣམས་དང་།

4 Tib. differs here slightly.

5 Ms. आस्थामात्यबला०

शासने योगमापत्तुमिति। एवमेव महाराज सततसमितमभिमर्दत[1] एव प्राणिनो जरामरणम्। एवं जरामरणाभिमर्दनेन महाराज पुरुषपुद्गलेन किञ्चित्स्यात्करणीयं नान्यत्रार्थचर्यायाः पूर्ववद्यावद्बुद्धानां शासने योगमापत्तुमिति विदित्वा तस्यां वेलायां गाथां भाषते।

यथा महान्तो विपुला नभ आसाद्य पर्वताः
महान्तादनुसंयान्ति निष्पीषन्तो वसुन्धराम्[2]।
न तत्र हस्तिनां भूमिर्न पत्तिरथवाजिनाम्
न चापि मन्त्रयुद्धेन जयो लभ्यो धनेन वा॥
एवं जरा च मृत्युश्च मनुष्यानभिमर्दति।
क्षत्रियान्ब्राह्मणान्वैश्याञ्छूद्रांश्चण्डालपुक्कसान्।
दुःशीलाञ्छीलसंयुक्तान्गृहस्थान्गृहिणस्तथा[3]
दहरांश्चैव वृद्धांश्च तथा [4]मध्यमपौरुषान्॥
विमर्दयति सर्वान् हि न किञ्चिदनुरक्षति।
तस्माद्धि पण्डितः पोषः संपश्यन्नर्थमात्मनः।
बुद्धे निवेशयेच्छ्रद्धां धर्मे संघे चाप्यनुत्तरे॥
स धर्मचारी कायेन वाचा वाप्यथ चेतसा।
इह चानिन्दितो भवति प्रेत्य स्वर्गे च मोदते॥

1 Ms. ०मभिवधत

2 130b, l. 6-7: ས་ནི་ཕྱེ་མར་བརློག་པ་ན།

3 131a, l. 2: ཁྲིམས་པ་དེ་བཞིན་རྟུལ་ཞུགས་ཅན། =व्रतिनस्तथा

4 Ms. मद्यम

अथ राजा प्रसेनजित्कोसलो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वोत्थायासनात्प्रकान्तः ।

भिक्षवः संशयजाताः सर्वसंशयछेत्तारं बुद्धं भगवन्तं पप्रच्छुः । किं भदन्त विशाखया मृगारमात्रा कर्म कृतम् । यस्य कर्मणो विपाकेन द्वात्रिंशदण्डाः प्रसूताः । तेन द्वात्रिंशत्पुत्रा जाता व्याडा विक्रान्ताः संवृत्ता इति । भगवानाह प्रणिधानवशात् । कुत्र प्रणिधानं कृतम् ।

भूतपूर्वं भिक्षवो वाराणस्यां नगर्यामन्यतमो गृहपतिपुत्रः कालगतः । तस्य सा पत्नी नित्यं पुत्राभिनन्दिनी । यदा भगवान् काश्यपः संम्यक् संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपाधिशेषे निर्वाणधातौ परिनिर्वृतः । तस्मिंश्च समये वाराणस्यां कृकिर्नाम राजा बभूव । तेन भगवतः काश्यपस्य सम्यक्संबुद्धस्य चतूरत्नमयस्तूपः प्रतिष्ठापितः । तत्र या सा अपुत्रा युवतिः पुत्राभिनन्दिनी सा वृद्धा संवृत्ता । तस्मिन् स्तूपे परिकर्म कृत्वा तिष्ठति । तया छन्दकभिक्षणं[1] कृत्वा तस्मिन् स्तूपे पूजा कृता प्रणिधानं च । यन्मया भगवतः काश्यपस्य सम्यक्संबुद्धस्य [सत्]काराः कृताः । अनेन मम[2] कुशलमूलेन बहवः पुत्रा भवेयुरिति कृत्वा प्रक्रान्ता नगरं प्रविष्टा । तत्रान्यतरा स्त्री प्रसूयमाना दुःखवेदनाभ्याहता विरौति । तया अपरा पृष्टा । किमर्थमेषा विरौति । तया यथावृत्तमारोचितम् । सा संलक्षयति ।

1 131b, l. 5: ངེས་འདུན་པའི་སློང་མོ་བྱས་ནས །

2 Ms. अनेनाहं

यद्यहं प्रसूता भवेयमहमप्येवंविधं दुःखमनुभवेयम्। यावत् पुनरपि द्वात्रिंशता [1]गोष्ठिकैस्तस्मिन्स्तूपे पूजा कृता। सा युवतिस्तत्र सन्निहितैव। पूजां कृत्वा प्रणिधानं कृतम्। अनेन वयं कुशलमूलेन महान्तोऽग्रबलिनः स्याम। ते तया पृष्टाः। पुत्राः किं युष्माभिः प्रणिधानं कृतम्। ते कथयन्ति अम्ब इदं चेदं च। सा कथयति। पुत्राः यद्येवमहमेव युष्माकं माता भवेयम्। ते कथयन्ति। अम्ब एवं भवत्विति। इत्युक्त्वा ते प्रक्रान्ताः। सा संलक्षयति। सा तावत्स्त्री एकवारं प्रसूयमाना दुःखवेदनाभ्याहता तथा विरौति अहं पुनर्द्वात्रिंशद्वारान् प्रसूयमाना कथं करिष्यामि इति। सा चैवं विकल्पयति। स्तूपसमीपे कुक्कुटी प्रसूता। सा मुहूर्तमात्रेण द्वात्रिंशदण्डानि प्रसूता न च विरौति। सा संलक्षयति। अयं शोभनप्रसवनोपाय इति विदित्वा तस्मिन् स्तूपे तीव्रेण प्रसादेन निपत्य प्रणिधानं कर्तुमारब्धा यथेयं कुक्कुटी मुहूर्तमात्रेण द्वात्रिंशदण्डानि प्रसूता एवमेव अहमपि सकृद् द्वात्रिंशदण्डानि प्रसूयेयेति।

किं मन्यध्वे भिक्षवः। या सा वृद्धा युवतिरेषैव सा विशाखा। तेन कालेन तेन समयेन ये ते द्वात्रिंशद् गोष्ठिका एत एव ते द्वात्रिंशद् विशाखापुत्राः। यदनया तत्र प्रणिधानं कृतं तस्य कर्मणो विपाकेन द्वात्रिंशदण्डानि प्रसूतानि।

किं भदन्त विशाखापुत्रैः कर्म कृतं यस्य कर्मणो विपाकेन अदूष्यनपकारिणो राज्ञा प्रसेनजिता प्रघातिताः। तेषां च शिरांसि

1 132a, l. 2: དགེ་འདུན།

पेडायां प्रक्षिप्य विशाखाया उपनामितानि । भगवानाह । एभिरेव भिक्षवः कर्माणि कृतान्युपचितानि पूर्ववद्यावत् फलन्ति खलु देहिनाम् ।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके शौण्डिकः प्रतिवसति। संबहुलाश्चौरा[1] मद्यं पर्येषमाणाः तस्य सकाशमुपसंक्रान्ताः । अस्ति मद्यमिति पृच्छन्ति । शौण्डिकपत्न्याभिहिता अस्तीति । तेषां मद्यं दत्तम् । अवद्रगो[2] नास्ति । तया वृषो दर्शितः । एतं प्रघातयत । ते कथयन्ति । शस्त्रं नास्ति । तया बन्धकं गृहीतम् । शस्त्रं दत्तम् । ते तं प्रघातयितुमारब्धाः । स हन्यमानश्चेतनां पुष्णाति । यदहं घात्ये तत्सर्वमनया शौण्डिकपत्न्या । तत्रोपपद्येऽहं यत्रैषां शिरांसि छित्त्वा पेडायां पूरयित्वा एतस्यां प्रेषयेयमिति ।

किं मन्यध्वे भिक्षवः । योऽसौ वृष एष एवासौ राजा प्रसेनजित्कोसलः तेन कालेन तेन समयेन । ये ते चौरा एत एव ते विशाखापुत्राः । या सा शौण्डिकपत्नी एषैव सा विशाखा तेन कालेन तेन समयेन [इति] विस्तरः ।

बुद्धो भगवान्राजगृहे विहरति वेणुवने कलन्दकनिवापे। तेन खलु समयेन पञ्चाभिज्ञस्य ऋषेराश्रमपदम्। तेन तस्मिन्पर्यटता आश्रमपदस्य नातिदूरे चिखले[3] भूप्रदेशे प्रस्रावः कृतः । दैवयोगात्तृषार्ता मृगी तं प्रदेशमनुप्राप्ता । तयासौ तृष्णार्तया पीतः

1 Ms. चवारा ; 132b, l. 7: ཆོམ་བརྐུན་པ །

2 133a, l. 1: ས་འཛར་བ་མེད་ནས །=no dinner

3 133a, l. 6: རྫབ་ཅན་གྱི་ཕྱོགས །=mud, mire

स्त्रीन्द्रियं च घ्रातम् । अचिन्त्यः सत्त्वानां कर्मविपाकः । आपन्नसत्त्वा संवृत्ता । यावदपरेण समयेन तस्मिन्नेव प्रदेशे आगत्य प्रसूता । दारको जातः । सा तं घ्रात्वा विसभागसत्त्व इति छोरयित्वा प्रकान्ता । यावत्तेन ऋषिणा तदाश्रमं पर्यटता स दारको दृष्टः । स समन्वाहर्तुं प्रवृत्तः कस्यायं पुत्र इति । यावत्पश्यत्यात्मानम् । तेनासौ आश्रमपदं प्रवेशित आपायितः पोषितः संवर्धितः । तस्य मृगस्य यादृशं शिर इति मृगशिरो मृगशिर इति संज्ञा संवृत्ता । अपरेण समयेन स ऋषिः कालगतः । मृगशिरसा कपालाकोटनी विद्या शिक्षिता । स कपालमाकोट्य सर्वं व्याकरोति । यदि तावत्खंखटस्वरो[1] भवति ऊर्ध्वगामी भवति देवोपपत्तिं व्याकरोति । अथ मध्यो भवति ऊर्ध्वगामी भवति मनुष्योपपत्तिं व्याकरोति । एतत्सुगतिनिमित्तम् । [अथ] दुर्गतिनिमित्तम् । यदि तावद्गद्गदस्वरो भवति अधोगामी भवति नरकोपपत्तिं व्याकरोति । अथ मध्यस्वरो भवति अधोगामी भवति तिर्यगुपपत्तिम् । अथ मृदुस्वरोऽधोगामी भवति प्रेतोपपत्तिम् ।

ततो भगवता तस्य विनयकालं ज्ञात्वा आयुष्मानानन्द उक्तः । गच्छानन्द चत्वारि शिरांस्याधाय स्रोतआपन्नस्य सकृदागामिनोऽनागामिनोऽर्हतश्चेति । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुतः । चत्वारि शिरांस्याधाय तस्य ऋषेः सकाशं गतः । व्याकुरुष्वेति । स स्रोतआपन्नस्येति कपालमाकोट्य कथयत्ययं देवेषूपपन्नः । सकृदागामिनोऽप्येवमेव । अनागामिनोऽप्येवमेव । अर्हतः कपाल-

1　133b, l. 4 : གལ་ཏེ་རེ་ཞིག་སྒྲ །

माकोट्य विषयं न जानाति न विजानाति। [1]तस्यैतदभवत्। भ्रष्टोऽस्मि तस्मादुपदेशतः किम्। अथवा न चार्यकुले प्रसूतः। किं वा निमित्तानि न तादृशानि येनास्य न जानामि तं[2] हि प्रचारम्। आयुष्मानानन्दः कथयति। न सर्वविद्यासु कृतश्रमस्त्वं येनास्य जानासि तं[2] हि प्रचारम्। अधीष्व तावन्निखिलां[3] विद्याम्। लोकस्य पश्चाद्व्यपदेक्ष्यसि त्वमिति। मृगशिराः कथयति। अस्ति कश्चित्त्वया सर्वविद्यासु कृतावी दृष्टः। स कथयति। अस्ति। तथागतोऽर्हत्सम्यक् संबुद्धः सर्वविद्यानां पारं गतः। अथ मृगशिरा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमिदमवोचत्।

तिर्यक् प्रेतमनुष्यदेवनिरये जानासि जन्तोर्गतिम्
शिष्टं नोपलभे च सत्त्वचरितं विद्यापराधे सति।
आचक्ष्व त्रिभवार्णवस्य महतो विस्तीर्णपारं प्रभो
किं तत्सर्वपरप्रवादिविजय शिष्टं न विज्ञायते[4] ॥ इति॥

भगवानाह।

अयो[5]घनहतस्यैव ज्वलतो जातवेदसः
अनुपूर्वोपशान्तस्य यथा न ज्ञायते गतिः।

1 134a, l. 4: ངོ་ཚ་བས་དེ་འདི་སྙམ་དུ་སེམས་ཏེ =मंकुभूतः। तस्यैतदभवत्। གང་གྱིར་འདི་ཡིས་འགྲོ་བ་མ་ཞེས་པ། བདག་ཅག་བསྟན་ པ་དེ་ལས་ཉམས་གྱུར་ཏམ།

2 Ms. न

3 Ms. ०निखिलेन

4 134b, l. 3: པ་རོལ་སྨྲ་ཀུན་ལས་རྒྱལ་དག་པ་མ་འཚལ་དེ་ཅི་གསུངས།

5 134b, l. 3-4: མེ་ཏུ་བསྲེག་པ་ལྕགས་ཀྱི་མེ། ལྕགས་ཀྱི་ཐོ་ བས་བརྡུངས་བྱས་ནས།

तथा सम्यग्विमुक्तानां कामपङ्कौघतारिणाम्
प्रज्ञप्तं वा[1] गतिर्नास्ति प्राप्तानामचलं पदम्[2] ॥ इति ॥

एवमुक्ते मृगशिरा भगवन्तमिदमवोचत् । लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतोऽन्तिके ब्रह्मचर्यमिति । ततो भगवता प्रव्राजित उपसंपादितः । प्रव्राज्योपसंपाद्य यथाभिरम्यं राजगृहे विहृत्य येन श्रावस्ती तेन चारिकां प्रक्रान्तः । अनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः । श्रावस्त्यां विहरति पूर्वारामे मृगारमातुः प्रासादे । अभ्यवकाशे चंक्रम्यमाणेन नक्षत्राणि विपरीतानि दृष्टानि । दृष्ट्वा च पुनरायुष्मन्तं मृगशिर[स]मामन्त्रयते । समन्वाहर मृगशिरः कियच्चिरेण देवो वर्षिष्यतीति । स कथयति । [3]नष्टोऽयं भदन्त लोकः प्रनष्टोऽयम् । यथा नक्षत्राणि व्यवस्थितानि द्वादशभिर्वर्षैः । भगवता नक्षत्राणि [4]समान्यधिष्ठायोक्तोः । पुनर्जानीष्वेति । स कथयति । षड्भिर्वर्षै रेवम् । भगवता पुनः पर्यनुयुक्तो ब्रवीति । पंचभिर्वर्षैः । एवं यावत्सप्तभिर्दिवसैरिति । तत्र भगवान् भिक्षूनामन्त्रयते स्म । शयनासनं भिक्षवश्छन्ने गोपयत । अद्यैव शलभसंनिपातेन देवो वर्षिष्यति । तत्र ये स्नास्यन्ति तेषामुत्पादगंडपिटकानि[5] न

1 Ms. बै

2 134b, l. 5: མི་གཡོ་གོ་འཕང་འཐོབ་རྣམས་ཀྱི ། འགྲོ་བ་གདགས[xyl. བཏགས] ཡོད་མ་ཡིན ། 3 135a, l. 4: མི་རྟང ། 

4 135a, l. 5: མཐུན་པར་བྱིན་གྱིས་བརླབས་ནས ། 

5 135b, l. 1: དེ་རྣམས་ལ་འབྲས་དང ། ཐོལ་མིག་འབྱུང་བར་མི་འགྱུར ། 

भविष्यन्तीति। इति हि मृगशिरो नक्षत्राणि चपलानि चंचलान्यनवस्थायीनि। जीवितमपि चंचलमनवस्थितमित्येवमुक्तः। मृगशिरा भगवतोऽभिप्रसन्नः। तथाभिप्रसन्नेन चार्हत्त्वं साक्षात्कृतम्। ततो विमुक्तिप्रीतिसुखसंवेदी गाथां भाषते।

गतिर्मृगाणां पवनमाकाशं पक्षिणां गतिः।
गतिर्विरागिणां धर्मो निर्वाणं गतिरर्हताम्॥ इति॥

अश्रौषीद्विशाखा मृगारमाता भगवान्कोसलेषु जनपदेषु चारिकां चरन् श्रावस्तीमनुप्राप्तः श्रावस्त्यां विहरत्यस्माकमेवाराम इति। श्रुत्वा च पुनर्येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णा। एकान्तनिषण्णां विशाखां मृगारमातरं भगवान्धर्म्यया कथया सन्दर्शयति पूर्ववद्यावत् संप्रहर्ष्य तूष्णीम्। अथ विशाखा मृगारमाता उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। अधिवासयतु मे भगवान् श्वोऽन्तर्गृहे भक्तेन सार्धं भिक्षुसंघेनेति। अधिवासयति भगवान्पूर्ववद्यावदुदकमणिं प्रतिष्ठाप्य। भगवतः प्रेष्यदारिकया कालारोचिकया कालमारोचयति। यावदसौ प्रेष्यदारिका पूर्वारामं गत्वा पश्यति भिक्षून्कवाटविवरेण नग्नान्स्नायिनः। दृष्ट्वा च पुनः संलक्षयति। नूनमार्यकाः प्रक्रान्ताः एभिः पुत्रमोटिकापुत्रैराजीविकैरयं[1] विहारोऽवष्टब्ध इति। सा

1 136a, l. 5: འཚོ་བ་པ་ནམ་ཕྱུག་འདི་དག་གིས་གཙུག་ལག་ཁང་འདིར་བདབ་པོ་སྙམ་ནས། Cf. विटवातपुत्र in p. 56, n, 3.

त्वरितत्वरितमागत्य कथयति। यत् खल्वार्ये जानीया आर्याः प्रकान्ताः। पुत्रमोटिकापुत्रैराजीवकैरसौ विहारोऽवष्टब्ध इति। विशाखा संलक्षयति। अस्थानमनवकाशो यद्भगवानधिवास्याभुक्त्वा प्रक्रमिष्यति। नूनमनया भिक्षवो विनग्ना दृष्टा इति। तयान्यः कालारोचकः पुरुषः प्रेषितः। समयो भदन्त सज्जं भक्तं यस्येदानीं भगवान्कालं मन्यत इति पूर्ववद्यावद् भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रम्। वृद्धान्ते[1] निषद्य भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त अष्टौ महादानानि प्रज्ञापयितुम्। आगन्तुके दानं गमिके दानं ग्लाने दानं ग्लानोपस्थायिके दानं ध्रुवं यवागुं ध्रुवं भैषज्यं भिक्षूणां वर्षाशाटीचीवरं भिक्षुणीनां चोदकशाटिकामिति[2]। भगवानाह। किं पुनस्तद् विशाखे आनुशंसं समनुपश्यन्ती आगन्तुके दानं ददासि। आगन्तुको भदन्त भिक्षुर्न गोचरकुशलो भवति न वीथीकुशलः। स मदीयं पिण्डपातं परिभुज्य गोचरकुशलो भविष्यति। वीथीकुशलश्च। साधु साधु विशाखे गतमेतत्। किमर्थं समनुपश्यन्ती गमिकदानं ददासि। गमिको भदन्त भिक्षुः पिण्डपातं पर्येषमाणः सार्थात्परिभ्रश्यते। यूथपरिभ्रष्टो विहन्यते। स मदीयं पिण्डपातं परिभुज्य सार्थान्न परिभ्रश्यते। नापि यूथपरिभ्रष्टो विहन्यते। साधु साधु विशाखे एतदपि गतम्। किमर्थवशं समनुपश्यन्ती ग्लाने दानं ददासि। ग्लानो भदन्त भिक्षुः पिण्डपातं

1 136b, l. 4: གནས་པའི་མཐར་འདུག་ནས །

2 Cf. *Mahāvagga*, viii. 15.

पर्येषमाणः क्लामेद्वा कालं वा कुर्यात् । स मदीयं पिण्डपातं परिभुज्य ग्लान्यादुत्थास्यति सुखस्पर्शं विहरिष्यति । साधु साधु विशाखे एतदपि गतम् । किमर्थवशं समनुपश्यन्ती ग्लानोपस्थायिके दानं ददासि । ग्लानोपस्थायिको भदन्त भिक्षुरात्मार्थं पिण्डकं पर्येषमाणो ग्लानस्य कृत्यं हापयति । स मदीयं पिण्डपातं परिभुज्य संपादयिष्यति । साधु साधु विशाखे एतदपि गतम् । किमर्थवशं समनुपश्यन्ती संघे ध्रुवयवागुं ददासि । सन्ति भदन्त भगवतः श्रावका दीप्ताग्नयो मन्दाग्नयश्च । तत्र ये मन्दाग्नयस्तेषामग्निसंरक्षणं[1] ये तु दीप्ताग्नयस्तेषां बलोपचयः । साधु साधु विशाखे । एतदपि गतम् । किमर्थवशं समनुपश्यन्ती संघे ध्रुवभैषज्यं ददासि । सन्ति भदन्त भगवतः श्रावका बह्वाबाधाः [स्वल्पाबाधाश्च] । तत्र ये बह्वाबाधास्तेषां कृतमेव तावत् । ये त्वल्पाबाधास्ते परिभुज्य भूयस्या मात्रया सुखस्पर्शं विहरिष्यन्ति । साधु साधु विशाखे एतदपि गतम् । किमर्थवशं समनुपश्यन्ती भिक्षूणां वर्षाशाटीचीवरं ददासि । अद्यैव मया भदन्त प्रेष्यदारिका कालारोचिका प्रेषिता । तया भिक्षवो दृष्टा नग्नाः स्नातुम्[2] । सा मे आगत्य कथयति । आर्यकाः प्रक्रान्ताः पुत्रमोटिकापुत्रैराजीविकैर्विहारोऽवष्टब्ध इति । ते मदीयेन वर्षाशाटीचीवरेण गुप्ताः स्नास्यन्ति । साधु साधु विशाखे एतदपि गतम् । किमर्थवशं समनुपश्यन्ती भिक्षुणीनामुदकशाटिकां ददासि । एकोऽयं भदन्त समयः संबहुलाश्च भिक्षुण्योऽजिरवत्यां नग्नाः स्नान्ति ।

1 Ms. संग्रक्षणं 2 Ms. स्नातु

ता गृहिण्यो विपुष्य्य[1] विपुष्य्य भिक्षुणीनामङ्गुल्यग्रेण गुह्यस्थानान्युपदर्शयन्ति । ताः उपदर्श्यमानाः मद्गुवो[2] भवन्ति । मदीयया तु उदकशाटिकया ता गुप्ताः स्नास्यन्ति । साधु साधु विशाखे यानि त्वया अष्टौ पुण्यक्रियावस्तूनि समाख्यातानि संदृश्यन्ते एतानि । सप्तस्वौपधिके[षु] पुण्यक्रियावस्तुष्वन्तर्गतान्येतानि । सप्तस्वौपधिकेषु पुण्यक्रियावस्तुषु [न] लभ्यं पुण्यस्य प्रमाणमुद्ग्रहीतुमेतावत्पुण्यं वा पुण्यफलं वा पुण्यफलविपाको वेति । अपि तु बहुत्वात् पुण्यस्य महापुण्यः[3] पुण्यस्कन्ध इति संख्यां गच्छति ।

इदं चाहं भदन्त श्रोष्यामि । अमुको भिक्षुः स भगवता प्रतिपद्येव[4] व्याकृताः । एषोऽपि भिक्षुस्त्रयाणां संयोजनानां प्रहाणात् स्रोतआपन्नो भवत्यविनिपातधर्मो नियतं संबोधिपरायणः सप्तकृत्वो[5] भवपरमाः सप्तकृत्वो देवांश्च मनुष्यांश्च संधाव्य संसृत्य[6] दुःखस्यान्तं करिष्यतीति । स कदाचित् श्रावस्तीमागमिष्यति पुनश्च गमिष्यति । स मदीयमागन्तुकभक्तं पूर्ववद्यावद्वर्षाशाटीचीवरं परिभोक्ष्यति । भिक्षुणी च यावदुदकशाटिकामिति । श्रुत्वा च पुनरधिगमिष्यामि प्रीतिप्रामोद्यमुदारं कुशलं नैष्क्रम्योपसंहितम् । अमुको भिक्षुः

1 138a, l. 3-4: གད[xyl. གོད་]ཅིང་གད[xyl. གོད་]ནས །

2 Cf. *Divyā.*, p. 633-4: मद्गुभूतो ; Pāli मङ्कु

3 Ms. महं पुराय

4 Ms. प्रतिपत्येव ; 138b, l. 1: སྨྲ་ནས །

5 The usual form found in other texts is सप्तकृद् ।

6 138b, l. ཉིང་མཚམས་སྦྱོར་ཞིང །=being reborn.

भगवता व्याकृतः। एष भिक्षुस्त्रयाणां संयोजनानां प्रहाणाद्राग-द्वेषमोहानां च तनुत्वात्सकृदागामी भविष्यति। सकृदिमं लोकमागत्य दुःखस्यान्तं करिष्यतीति। सोऽपि कदाचित् श्रावस्तीमागमिष्यति। स मदीयमागन्तुकभक्तं पूर्ववद्यावत् वर्षाशाटीचीवरं भिक्षुणी चोदक-शाटिकामिति। श्रुत्वा च पुनरधिगमिष्यामि प्रीतिप्रामोद्यमुदारं कुशलं नैष्क्रम्योपसंहितम्। अमुको भिक्षुः स भगवता व्याकृतः। एष भिक्षुः पंचानामवरभागीयानां संयोजनानां प्रहाणादनागामी भविष्यत्यनागन्ता पुनरिमं लोकमिति। सोऽपि कदाचित् श्रावस्ती-मागमिष्यति पुनश्च गमिष्यति। स मदीयमागन्तुकभक्तं पूर्व-वद्यावद्वर्षाशाटीचीवरं भिक्षुणी चोदकशाटिकामिति। श्रुत्वा च पुनरधिगमिष्यामि प्रीतिप्रामोद्यमुदारं कुशलं नैष्क्रम्योपसंहितम्। अमुको भिक्षुः स भगवता व्याकृतः। एष भिक्षुः सर्वक्लेशप्रहाणा-दर्हत्त्वं साक्षात्कृत्वा निरूपधिशेषे निर्वाणधातौ प्रवेक्ष्यतीति। सोऽपि कदाचित् श्रावस्तीमागमिष्यति पुनश्च गमिष्यति। स मदीय-मागन्तुकभक्तं पूर्ववद्यावद्वर्षाशाटीचीवरं भिक्षुणी चोदकशाटि-कामिति। श्रुत्वा पुनरधिगमिष्यामि प्रीतिप्रामोद्यमुदारं कुशलं नैष्क्रम्योपसंहितम्। अथ भगवान् विशाखां मृगारमातरं धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्योत्थायासनात्प्रक्रान्तः।

अथ भगवान् यथाभिरम्यं श्रावस्त्यां विहरति। येन वैशाली तेन चारिकां प्रक्रान्तः। अनुपूर्वेण चारिकां चरन्वैशालीमनुप्राप्तः। वैशाल्यां विहरति मर्कटह्रदतीरे कूटागारशालायाम्। अथ भगवान् पूर्वाह्णे निवास्य पात्रचीवरमादाय वैशालीं पिण्डाय प्राविक्षत्।

तेन खलु समयेन संबहुला भिक्षव आरामद्वारे [1]अशुचिम्रक्षितानि शयनासनानि शोचयन्त्यातापयन्ति प्रविषजन्ति। अद्राक्षीद्भगवान् संबहुलान्भिक्षून् आरामद्वारे अशुचिम्रक्षितानि शयनासनानि शोचयत आतपयतः प्रविषजतः। दृष्ट्वा च पुनरस्यैतदभवत्। यदपि श्राद्धा ब्राह्मणगृहपतयः प्रपीड्य प्रपीड्य[2] त्वङ्मांसशोणितं दानानि ददति पुण्यानि कुर्वन्ति तदपि भिक्षवो मात्रया प्रतिसंख्याय परिभुंजन्त इति विदित्वा वैशालीं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपातप्रतिक्रान्तः पात्रचीवरं प्रतिशामय्य पादौ प्रक्षाल्य विहारं प्राविक्षत प्रतिसंलयनाय। अथ भगवान् सायाह्ने प्रतिसंलयनाद् व्युत्थाय पुरस्ताद् भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निष्यद्य भगवान् भिक्षूनामन्त्रयते स्म। इहाहं भिक्षवः पूर्वाह्णे निवास्य पात्रचीवरमादाय वैशालीं पिण्डाय प्राविक्षम्। अद्राक्षमहं भिक्षवः संबहुलान्भिक्षूनारामद्वारे अशुचिम्रक्षितानि शयनासनानि शोचयत आतपयतः प्रविषजतः। दृष्टा च पुनर्मे एतदभवत्। यदपि श्राद्धा ब्राह्मणगृहपतयः प्रपीड्य प्रपीड्य त्वङ्मांसशोणितं दानानि ददति पुण्याणि कुर्वन्ति तदपि भिक्षवो मात्रया प्रतिसंख्याय परिभुञ्जन्ते। साधु भिक्षवः श्रद्धादेयस्य मात्रापरिभोजितायाः काल[परि]भोजिताया वीचिपरिभोजितायाः संख्यापरिभोजिताया मितपरिभोजितायाः।

1 *Mahāvagga*, viii. 16 तेन खो पन समयेन भिक्खू पणीतानि भोजनानि भुञ्जित्वा मुट्ठस्सति सुपिनन्तेन असुचिं मुच्चति।

2 140a, l. 1: ཟད་ཟད་དུ།

अथ भगवाञ्छन्दादेयस्य मालादिपरिभोजितानां वर्णं भाषित्वा भिक्षूनामन्त्रयते स्म। तस्मात्तर्हि भिक्षवो न विना प्रत्यास्तरणेन सांघिकं शयनासनं परिभोक्तव्यमशुचिम्रक्षितं शयनासनं च। तत्क्षणादेव शोचयितव्यमन्यथा सातिसारः।

अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय वैशालीं पिण्डाय प्राविक्षदायुष्मतानन्देन पश्चाच्छ्रमणेन। अद्राक्षीद् भगवानन्यतरं पुरुषं कालकपृष्ठम्[1]। दूरादेव[2] दृष्ट्वा च पुनरायष्मन्तमानन्दमामन्त्रयते। पश्यसि त्वमानन्द एतं पुरुषं कालकपृष्ठम्[1]। एवं भदन्त। एष आनन्द पुरुषः काश्यपस्य सम्यक्संबुद्धस्य प्रवचने प्रव्रजित आसीत्। तत्रानेन सांघिकं शयनासनं कल्प[3]प्रत्यास्तरणेन मलप्रत्यास्तरणेन पट्टिकां[4] सुरुचिकां[5] लोढकं[6] कृत्वा परिभुक्तम्। तस्य कर्मणो विपाकेन पञ्च जन्मशतानि कालकपृष्ठो[1] जातः। यावदेतर्ह्यपि कालकपृष्ठो जात इति। विदित्वा वैशालीं पिण्डाय चरित्वा पूर्ववद्यावत्प्रतिसंलयनाद् व्युत्थाय पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षूनामन्त्रयते स्म। अद्याहं भिक्षवः पूर्वाह्णे निवास्य पात्रचीवरमादाय वैशालीं पिण्डाय

1 Ms. कालकापृष्ठं 140b, l. 6: མི་རྒྱབ་ནག་པོ། 2 Ibid., ཕ་བི།

3 141a, l. 1: མིང་ཅན།=having a name.

4 Ibid., l. 2: ཤུར་བུ་དང།=belt; cf. Mvyut. 272.48 पट्टिका ; S. C. Das's Tib. Dict. *sv.*=सुरूचिका

5 Ibid. ཀྲོ་ཅང=narrow, long money-bag made of net.

6 Ibid. ལྷུག་ཕུའི་གདིང་བ=लोढकप्रत्यास्तरणं ; cf. Mvyut. 272. 49: लोठका=ལྷུག་པོད།

प्रविष्टः। तत्राहमद्राक्षं पुरुषं कालकपृष्ठम्। स काश्यपस्य सम्यक् संबुद्धस्य प्रवचने भिक्षुरासीत्। तत्रानेन सांघिकं शयनासनं कल्पप्रत्यास्तरणेन पूर्ववद्यावत्पञ्च जन्मशतानि कालकपृष्ठो जातः। तस्मात्तर्हि भिक्षवोऽद्याग्रेण न भिक्षुणा कल्पप्रत्यास्तरणेन सांघिकं शयनासनं परिभोक्तव्यम्। परिभुंक्ते। सातिसारः। अपि तु द्वाभ्यां प्रत्यास्तरणाभ्यां परिभोक्तव्यं घनेन[1] वा एकपुटेन[2]। पैलोत्तिकेन[3] वा द्विपुटेन।

भिक्षवश्चित्रोपचित्राणि प्रत्यास्तरणानि धारयन्ति दीर्घदशानि। ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। भगवानाह। नीलं कर्दमं कषायं वा प्रत्यास्तरणं शस्त्रलूनं कृत्वा धारयितव्यम्। अन्यथा सातिसारः।

[भिक्षवः कण्डूरो]गेण बाध्यन्ते। तस्य चीवरकाणि पूयशोणितोपलिप्तानि दुर्गन्धितानि मक्षिकाकीर्णानि। स पिण्डपातं प्रविष्टः। तं दृष्ट्वा ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि कण्डूप्रच्छादनं धारयितव्यम्[4]। पञ्चभिः षड्भिर्वा दिवसैः शोचयितव्यम्। अन्यथा सातिसारः।

भिक्षवः कुष्ठरोगेण बाध्यन्ते। ते सांघिकानि शयनासनानि परिभुञ्जते। प्रासादेषु पुष्करिण्यां द्वारकोष्ठके परिषण्डायां चंक्रमेषु संस्थानवृक्षेषु तिष्ठन्ति। दुर्गन्धान् मक्षिकाभिराकीर्णान्।

1 141b l. 2: སྟུག་ན=thick

2 Ibid. རིམ་གཅིག་གིས།

3 Ibid. སེང་བཞིག་ན=thin

4 Cf. *Mahāvagga*, viii. 17.

तान्दृष्ट्वा ब्राह्मणगृहपतयोऽवध्यायन्ति क्षिपन्ति विवाचयन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। कुष्ठरोगाभिभूतस्याहं भिक्षवो भिक्षोरासमुदाचारिकान्धर्मान्प्रज्ञापयिष्यामि। कुष्ठरोगाभिभूतेन भिक्षुणा सांघिकं शयनासनं लयनं च न परिभोक्तव्यम्। प्रासादादिषु यथापरिकीर्तितेषु स्थानेषु स्थातव्यम्। सांधिकी प्रस्रावकुटी वर्चःकुटी च न प्रवेष्टव्या। प्रतिगुप्ते स्थाने संघेन तस्य वासो देयः। उपस्थानं च कर्तव्यम्। कुष्ठरोगाभिभूतो भिक्षुर्यथाप्रज्ञप्तानासमुदाचारिकान्धर्मान्न समादाय वर्तते संघो वा सातिसारो भवति[1]।

आयुष्मानुदाली[2] बुद्धं भगवन्तं पृच्छति[3]। लभ्यं भदन्त सुगतचीवरमतिरेकचीवरकल्पेन धारयितुम्। न लभ्यमुदालिन्[2]। लभ्यं भदन्त कौशेयं चीवरं त्रिचीवराधिष्ठानेन अतिरेकचीवराधिष्ठानेन धारयितुम्। लभ्यमुदालिन्[2] यथेष्ठतः[4]। एवं पूर्णकं शाणकं लभ्यम्।

उद्दानम्।
भाङ्गेयं केशचीवरं नाग्न्यं[5] केशलुञ्चनं पर्णशाटीम्।
अजिनं सान्तरोत्तरं तिरीटिमञ्जनीलकम्॥

श्रावस्त्यां निदानम्। अथान्यतमो भिक्षुर्येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते

1 142b, l. 1: Tib. ends here a section. འདུལ་བ་བཞི། བམ་པོ་ར་བཞི་པ། See above p. 69.

2 Tib. उपालि; 142b, l. 1: ཉེ་བར་འཁོར།

3 Ms. प्रच्छति

4 Ms. यथेष्ठत; 142b, l. 3: ཅི་དགར་ཟད་དེ།

5 Ms. नाग्रय; 142b, l. 4: གཅེར་བུ།

अस्थात्। एकान्तस्थितः स भिक्षुर्भगवन्तमिदमवोचत्। [1]इच्छाम्यहं भदन्त भाङ्गेयं चीवरं धारयितुम्। भगवानाह। तीर्थिकध्वज एष मोहपुरुषः यदुत भाङ्गेयं चीवरम्। तस्मान्न भिक्षुणा भाङ्गेयं[2] चीवरं धारयितव्यम्। धारयति। सातिसारो भवति।

अपरो भिक्षुर्गत्वा भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त केशचीवरं[3] धारयितुम्। भगवानाह। तीर्थिकध्वज एष मोहपुरुषः। पूर्ववद्यावत्सातिसारो भवति।

अपरो भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त नाग्न्यं[4] समादातुम्। भगवानाह। तीर्थिकध्वज एष मोहपुरुषः यदुत नाग्न्यम्। अपि तु [5]त्रिचीवरं मयानुज्ञातं किमर्थं नाग्न्यं समाद-दासि। तस्मान्न भिक्षुणा नाग्न्यं समादातव्यम्। समाददाति। आपद्यते स्थूलात्ययः। अथ स भिक्षुर्नाग्न्यमलभमानः शिक्षां प्रत्याख्याय हानायावृत्तः। भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्तासौ भिक्षुर्नाग्न्यमलभमानः शिक्षां प्रत्याख्याय हानायावृत्तः। भगवानाह। न भिक्षव एतर्हि यथा अतीतेऽप्यध्वनि अह्रीक्यदोषाद्[6] दारिकां न लब्धवांस्तच्छ्रूयताम्।

भूतपूर्वं भिक्षवो धृतराष्ट्रो नाम हंसराजो बभूव। तस्य दुहिता स्वयंवरावतीर्णा। श्रुत्वा नानादिग्देशनिवासिनः पक्षिणः सन्निपतिताः। एकैकः संलक्षयति मां वरयिष्यतीति। तया

1 Ms. यच्छामि 2 གསོ་མ། 3 143a, l. 2: སྐྲའི་ཆོས་གོས།

4 Ms. नाग्नय' Ibid, l. 4: གཅེར་བུ། Cf. Pāli: नग्गियम् in *Mv*. viii. 28.1.

5 Ms. तृचीवरं 6 Ms. अनाह्रीक्रमोषां

दारिकया मयूरो दृष्टः । सा कथयति । एष मम भर्तेति । तस्यापरैः समाख्यातम् । त्वमनया वृत इति । स कलापं पूर्वीकृत्य[1] नर्तितुमारब्धः । स धृतराष्ट्रेण दृष्टः । कथयति । किमर्थमयं नृत्यतीति । अपरैः समाख्यातम् । तव दुहिता वृता इति[2] । स कथयति । ह्रीव्यपत्राप्यवियुक्तोऽयं नाहमस्मै दुहितरं ददामीति । स श्रुत्वा मयूरो धृतराष्ट्रसकाशं गत्वा गाथां भाषते ।

स्वरो मनोज्ञो रुचिरश्च[3] वर्णो व्यामप्रमाणानि च वर्हकाणि ।
ग्रीवा च वैदूर्यमणेः समाना ददासि कस्मान्न भवान् सुतां मे ॥

धृतराष्ट्रः प्राह ।

स्वरो मनोज्ञो रुचिरश्च[3] वर्णो व्यामप्रमाणानि च वर्हकाणि ।
ग्रीवा च वैदूर्यमणेः समानाह्रीक्यदोषात्तु[4] न ते ददामि ॥ इति ॥

किं मन्यध्वे भिक्षवः । योऽसौ मयूरः एष एवासौ भिक्षुस्तेन कालेन तेन समयेन । तदाप्येष अह्रीक्यदोषाद् दारिकामलभमानो दुःखी दुर्मना पक्षिगणमध्यादवक्रान्तः । एतर्ह्यप्यसौ नाग्न्यमलभमानो दुःखी दुर्मना भिक्षुसंघमध्यात्प्रक्रान्तः ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं भदन्त केशान् लुंचितुम् । भगवानाह । मुण्डनं मया समनुज्ञातम् । कस्मात्त्वं केशान् लुंचसि । तीर्थिकधृत[5] एष मोहपुरुषः यदुत केशलुंचनम् । तस्मान्न हि भिक्षुणा केशा लुंचितव्याः । लुंचति । सातिसारो भवति ।

1 143b, l. 4-5: མཇུག་མ་བསྒྲེང་ནས ।=पुच्छं प्रसार्य 2 Ms. दुहिता धृता

3 Ms. स्वरोमनोज्ञात चिरश्च 4 Ms. आह्रीक्रमोषान्तु

5 144a, l. 7: བརྟུལ་ཞུགས་ཡིན ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त पर्णशाटिकां धारयितुम्। भगवानाह। तीर्थिकधृतमेतन्मोहपुरुषः। पूर्ववद्यावत्सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त अजिनं धारयितुम्। भगवानाह। तीर्थिकध्वजमेतन्मोहपुरुष यदुत अजिनम्। धारयति पूर्ववद्यावत्सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त सान्तरोत्तरेण[1] चीवरेण यापयितुम्। त्रिचीवरं मया मोहपुरुष समनुज्ञातम्। कस्मात्त्वं सान्तरोत्तरेण यापयसि। तस्मान्न भिक्षुणा सान्तरोत्तरेण चीवरेण यापयितव्यम्। यापयति। सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त तिरीटीं[2] धारयितुम्। तिरीटि इति वल्कलः[3]। भगवानाह। तीर्थिकध्वज एष पूर्ववद्यावत् सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त अंगनाडिकां[4] धारयितुम्। भगवानाह। आगारिकधर्मस्तर्ह्येषाहो मोहपुरुष यदुतांगनाडि[का]। पूर्ववद्यावत्सातिसारो भवति[5]।

1 144b, l. 3: བླ་གོས་མཐའ་གོས་དང་བཅས་པས། Cf. *Mv.* viii. 22. 1.

2 144b, l. 7: གསོ་མ་འདི་སེང་རས་ཀྱི་ཆོས་གོས། =भाङ्गेयम्

3 *Ibid.* Tib. omits it.

4 *Ibid.* པ་ཙར་[xyl. ]ཚར=कौपीन। Cf: Pāli. अक्कनाडम् in *Mahāvagga*, viii. 21. 3.

5 Mv. viii. 28 adds कुसचीरं वाकचीरं फलकचीरं केशकम्बलं बालकम्बलं उलूकपक्खं अजिनक्खिप्पं च अक्कनाडं पोत्थकम्।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं भदन्त सर्व-नीलं चीवरं धारयितुम् । भगवानाह । आगारिका ह्येनं धारयन्ति । तस्मान्न भिक्षुणा सर्वनीलं चीवरं धारयितव्यम् । पूर्ववद्यावत् सातिसारो भवति । एवं सर्वपीतं सर्वलोहितमवदातं न कल्पयत्येव[1] ।

उद्दानम् ।
दीर्घदशं छन्नदशं कम्बुकोष्णीषवेष्टनम् ।
कूतपमुष्ट्रकम्बलं प्लीहकानन्दः सान्तरोत्तरम् ॥

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं भदन्त दीर्घदशं चीवरं धारयितुम् । भगवानाह । तीर्थिकध्वजः पूर्व-वद्यावत् सातिसारो भवति ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं भदन्त छन्नदशं चीवरं धारयितुम् । भगवानाह । तीर्थिकध्वज एष मोहपुरुष पूर्ववद्यावत् सातिसारो भवति ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं कम्बुकं धारयितुम् । भगवानाह । आगारिकध्वज एष मोहपुरुषः पूर्व-वद्यावत् सातिसारो भवति ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत् । इच्छाम्यहं भदन्त उष्णीषं धारयितुम्[1] । भगवानाह । आगारिकध्वज एष मोह-पुरुषः पूर्ववद्यावत् सातिसारो भवति ।

1 Cf. Mv. viii. 29: सब्बनीलकानि सब्बपीतकानि सब्बलोहितकानि सब्बमञ्जेट्ठकानि सब्बकण्हानि सब्बमहारङ्गरत्तानि सब्बमहानामरत्तानि अच्छिन्नदसानि दीघदसानि पुप्फदसानि फणदसानि कञ्चुकं तिरीटकं वेठनम् ।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त शिरोवेष्टनं धारयितुम्। भगवानाह। आगारिकध्वज एष मोहपुरुषः पूर्ववद्यावत् सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचत्। इच्छाम्यहं भदन्त कुतपं[1] धारयितुम्। भगवानाह। आगारिकध्वज एषः पूर्ववत् सातिसारो भवति।

अपरोऽपि भिक्षुर्भगवन्तमिदमवोचात्। इच्छाम्यहं भदन्त उष्ट्रकम्बलं[2] धारयितुम्। भगवानाह। आगारिकध्वज एषः पूर्ववद्यावत् सातिसारो भवति।

आयुष्मान् प्लीहकानन्दः[3] अन्यतमस्मिन्नभिक्षुके आवासे अकवाटके वर्षा उपगतः। तस्य बहिर्निर्गतस्य संघाट्युपहृता। एतद्यावद्भगवानाह। न भिक्षुणा अभिक्षुके आवासे अकवाटके वर्षा उपगन्तव्यम्। न च विना संघाट्या क्वचिद्गन्तव्यम्। गच्छति। सातिसारो भवति।

आयुष्मान् प्लीहकानन्दो ग्लानः। तस्यायुष्मानानन्दो ग्लानोपस्थायकः। देवश्च वर्षितुमारब्धः। स नोत्सहते संघाटीं प्रावृत्य गन्तुम्। भगवानाह। सान्तरोत्तरेण गन्तव्यम्।

अपि तु संघाट्या पंचोपनिक्षेपणकल्पा। सभिक्षुक आवासः सकवाटः। देवो वर्षति। वर्षाशङ्के च[4]। नदीपारं वा गन्तुकामो

1 Ms. कुतपं; 146a, l. 3: ར་བལ་གྱི་གོས་བཅང་བར།

2 146a, l. 5: ཇ་བལ་གྱི་ཀླམ། 3 146a, l. 6: མཆིན་ནད་ཅན།

4 Ms. चानन्दी।

भवति। आस्तीर्णः कठिन आवासो भवति। संघेन[1] सम्मतिर्दत्ता भवति।

अन्तरोद्दानम्।
वार्षिक-श्रमणोद्देशा उत्पादेनापि च द्वयम्।
कुलोपकाश्च कौकृत्यं संघलाभेन तस्य तत्॥

उक्तं भगवता भिक्षूणां चीवरपातो देय[2] इति। भिक्षवः संघ-प्रवारित एव जनपदे चारिकां प्रक्रामन्ति। तेषां न कश्चिल्लाभं गृह्णाति। भगवानाह। भिक्षुमवलोकयित्वा[3] गन्तव्यं योऽस्य लाभं गृह्णाति। अपरेऽपि भिक्षव अनवलोकिता एवं गृह्णन्ति। भिक्षूणां परस्परं विरोधो भवति। भगवानाह। न भिक्षुणा अनव-लोकितेन[4] लाभो ग्रहीतव्यः। गृह्णाति। सातिसारो भवति। अपरेऽपि भिक्षवः अवलोकिता अपि प्रतिज्ञाय[5] न गृह्णन्ति। भगवानाह। ते सर्वं दाप्याः[6]। श्रामणेराणां प्रक्रान्तानां न कश्चिल्लाभं गृह्णाति। भगवानाह। तेषामाचार्योपाध्यायैर्ग्रहीतव्यम्। भिक्षवः कुलाभं[7]

1 Ms. संघाटी संव्रत्तिर्दत्ता ; 146b, l. 5: དགེ་འདུན་གྱིས་གནང་བ་བྱིན་པར་གྱུར་པའོ། Cf. Mv. viii. 23.3: पच्छिमे भिक्खवे पच्चया संघाटिया निक्खेपायः गिलानो वा होति वस्सिकसंकेतं वा होति नदीपारं गन्तुं वा होति अग्गलगुत्ति विहारो वा होति अत्थतकठिनं वा होति।

2 146b, l. 6: ཆོས་གོས་ཀྱི་རྙེད་པ་སྦྱིན་པར་བྱའོ།

3 For अवलोक्य ; 147a, l. 1: བཅོལ་ནས། =entrusted to one's charge.

4 Ms. ०लोकेन

5 Not in Tib.

6 147a, l. 3 : དེ་རྣམས་ཀྱིས་ཐམས་ཅད་མངོན་པར་བྱའོ།

7 Ibid. l. 5: རྙེད་པ་ཚུང་དུ།

भाजयन्ति । विप्रक्रान्तानां नानुप्रयच्छन्ति कुलाभ इति कृत्वा । भगवानाह । येऽवलोकितास्तैर्ग्रहीतव्यम्[1] । अपरेऽनवलोक्यैव गताः । तेषां न कश्चित् गृह्णाति । भिक्षवः कौकृत्येन न गृह्णन्ति । भगवानाह । ग्रहीतव्यम् । नात्र कौकृत्यं करणीयम् । अपरं नैव शक्यते भाजयितुमल्पं कृत्वा । भगवानाह । अन्येन मिश्रीकृत्य विहारस्थैर्भाजयितव्यम् । नात्र कौकृत्यं करणीयम् । कुलाभमवलोकितो न गृह्णाति । पंच पणानुपादाय स्फुटं दापयितव्यम्[2] ।

अन्यतमस्मिन् कर्वटके गृहपतिः। तेन विहारः कारितः। तत्र यदि भिक्षुशतं प्रतिवसति [3]पटकशतं ददाति। एवं यावदेकोपि भिक्षुः प्रतिवसति पटकशतमेव ददाति। यावदपरेण समयेन तस्मिन्नेव विहारे द्वौ महल्लौ वर्षोषितौ। तेन गृहपतिना पटकशतं प्रेषितम् । तौ गृहीत्वा परस्परं विचारयतः। एकः कथयति संघस्यायं लाभः प्रतिपद्यत इति। द्वितीयः कथयति। अस्माकमेव प्रापद्यत इति। यद्येवं गृहाण। स कथयति। मा परस्परविरोधः स्यात्। यावदेकेनापि न गृहीतम् । तौ पुनर्विचारयतः। कथमत्र प्रतिपत्तव्यम् । एकः कथयति। भिक्षव आहूयन्ताम् । तैः सह भाजयिष्पामः। द्वितीयः कथयति। एवं भवतु। को गच्छतु। यो नवकः। को वस्त्राणि गोपायति। यो नवकः। न शक्यमेवम्

1 Ms. always गृहीतव्य for ग्रहीतव्य

2 147b, l. 2: མ་ཤ་ཀ་ལྔའི་རིན་ཡན་ཆད་ནི་ངེས་པར་བདའ་བར་བྱའོ །

3 147b, l. 3: རས་ཡུག=cotton cloths

यो नवकः स गच्छतु यो वृद्धः स वस्त्राणि गोपायतु। एवं भवतु। नवकः श्रावस्तीं गतो भिक्षूणामानयनाय। आचरितं षड्वर्गिकाणाम्। अशून्यं जेतवनद्वारमन्यतमान्यतमेन षड्वर्गिकेण। उपनन्दो जेतवनद्वारे तिष्ठति। तेनासौ दूरत एव दृष्टो बकाकारशिराः[1] प्रलम्बभ्रूः। स संलक्षयति। कोऽप्ययं स्थविरो भिक्षुरागच्छति। प्रत्युद्गच्छामीति। स प्रत्युद्गतः। स्वागतं स्वागतं स्थविर। वन्दे आचार्य। स संलक्षयति। नायमाचार्यं जानीते नाप्युपाध्यायम्। महल्लोऽयमिति विदित्वा कथयति। सालोहित कुतस्त्वमागच्छसि। अमुकस्मात्कर्वटकात्। किं तत्र विहारः। विहारः। किमसौ विहार आहोस्विद्विघातः[2]। तेन यथावृत्तं विस्तरेण समाख्यातम्। त्वं किमर्थमागतः। भोजनाय भिक्षून्नयामि। यद्येवमहमेव युष्माकमनुकम्पार्थं गच्छामि। आचार्य शोभनम्। उपनन्दः संलक्षयति। यद्ययं मत्सकाशादन्यत्र गमिष्यति महाजनप्रतिसंविदितं करिष्यति। सुरक्षितः कर्तव्य इति। स तेन प्रतिशामितः। अकालपानको दत्तः। कथासंलापेन तावद्विधारितो यावद्विकालीभूतम्। शय्या शोभना प्रज्ञप्ता। पादशौचं पादम्रक्षणं च दत्तम्। तावच्चावस्थितो यावन्मिद्धमवक्रान्तम्। तत उपनन्देन सा रात्रिः कृच्छ्रेणातिनामिता। मा मन्त्रस्रावः[3] स्यादिति। ततः स रात्रमेवोत्थाय सालोहितमादाय त्वरित-

1 Ms. चूकाकार० ; 148a, l. 3: མགོ་སྐྲ་བའི་མི་དེག་ལྟར་སྐྲུ་བ་སྨིན་མ་འཕྱང་བ་ཞིག །

2 148a, l. 7: འོན་དེ་འཕོངས་པ་ཡིན །

3 Ms. श्राव:

त्वरितं संप्रस्थितः। अनुपूर्वेण कर्वटकमनुप्राप्तः। ततस्तेन द्वितीयेन सालोहितेन विहारस्थेन[1] स्वागतवादसमुदाचारेण समुदाचर्य विश्रामितः। अथ त्रयोऽपि जना एकस्मिन् स्थाने निषण्णाः। उपनन्दः कथयति। भाजयामो लाभं स्थविराः। भाजयामः। उपनन्देनैको महल्ल उक्तः। सालोहित त्वं भाजय। स्थविर नाहं भाजयामि। किमर्थम्। मा मे प्रत्यवायः स्यात्[2]। द्वितीयोऽप्युक्तः। सालोहित त्वं भाजय। सोप्येवमेव कथयति। उपनन्दः कथयति। युवां प्रत्यवायभीरुकौ किमिच्छथः। उपनन्द ऊर्ध्वपादोवाङ्मुखो नरकं गमिष्यतीति। उपनन्दः संलक्षयति। सालोहितावेतौ महल्लौ भेत्तव्याविति। ततस्तयोर्ध्रुवप्रचारं कल्पकारं पृष्ट्वा एकस्य सकाशमुपसंक्रम्य पृच्छति। सालोहित त्वयात्र किं कृतम्। स्थविर नित्यं मया विहारः सिक्तः संमृष्टः सुकुमारी गोमयकार्षी दत्तेति। सालोहित यदि सेचनेन संमार्जनेन वा लाभो लभ्येत उपनन्दः सर्वविहारान्सिञ्चेत् संमार्जयेच्च। अपि तु योऽत्र लाभः संपन्नः स तस्यान्यस्य सालोहितस्यानुभावात्। सोऽस्मिन्विहारे कालानुकालं धर्मश्रवणं ददाति। धर्मश्रवणार्थिन्यो देवता औत्सुक्यमापन्नाः। येऽत्र लाभसम्पन्नाः[3]। ततस्तस्यानुभा[वा]दयं [4]लाभः सम्पन्नः। यमसौ ददाति [सः] ग्रहीतव्यो नो तु विचारयितव्यः। स तेनाभ्याहत इति प्रतिभिन्न-

1 Ms. चिराहारस्तेन ; 148b, l. 5: ཁང་དུ་གནས་པའི་ཀློན་ཞུགས།

2 Ms. प्रत्यपाय ; 148b-149a, l. 1: བདག་ལ་ཉེས་པ་བྱུང་ན་མི་རུང་ངོ། Cf. *Divyā*. p. 617: अत्ययो मे भगवन्।

3 Ms. येत्र ; 149a, l. 7: དེས་ན་རྙེད་པ་རྙེད་པར་གྱུར་གྱིས། 4 Ms. लोभ०

स्तूष्णीमवस्थितः। ततो द्वितीयस्य सकाशमुपसंक्रम्य कथयति। सालोहित त्वयात्र किं कृतम्। स्थविर मयात्र कालानुकालं धर्म-श्रवणं दत्तम्। सालोहित यदि धर्मश्रवणेन लाभो लभ्येत उपनन्दस्तिष्ठन् गच्छन्निषण्णो निपन्नः सर्वकालं धर्मं देशयेत्। यः कश्चिदयं लाभः सम्पन्नः सर्वोऽसौ तस्यान्यस्य सालोहितस्यानु-भावात्। तेनायं विहारो नित्यकालं सिक्तः संमृष्टः सुकुमारी गोमय-कार्षी तु प्रदत्ता। उक्तं भदन्त भगवता पञ्चानुशंसाः संमार्जने। कतमे पञ्च। आत्मनश्चित्तं प्रसीदति। परस्य चित्तं प्रसीदति। देवता आत्तमनसो भवन्ति। प्रासादिकसंवर्तनीयं कुशलमूल-मुपचिनोति। कायस्य भेदात् सुगतौ स्वर्गलोके देवेषूपपद्यत इति। तदत्र विहारे संमार्जनेन दानपतयोऽभिप्रसन्नाः। देवता चात्तमनसः संवृत्ताः। तेनात्र लाभसंपन्नाः। अतस्तस्यानुभावा-दयं लाभः सम्पन्नः। यमसौ ददाति स ग्रहीतव्यो नो तु विचारयि-तव्य इति। सोऽप्यभ्याहतः प्रतिभिन्नस्तूष्णीमवस्थितः। तौ निष्प्रति-भातौ कृत्वा कथयति। सालोहितावस्त्यन्य[1] उपायः। ज्ञप्तिं कृत्वा भाजयामः। [2]ज्ञप्तिकर्माकोप्यमुक्तं भगवतेति। तौ पूर्वमेवाभ्या-हतौ कथयतः। स्थविर यथेच्छसि तथा कुरुष्वेति। तत उपनन्देन त्रयो भागाः कृताः। द्वयोर्भागयोर्मध्ये स्वयं निषण्णः। तयो-र्द्वयोर्मध्ये एकं भागं स्थापयित्वा ज्ञप्तिं कर्तुमारब्धः। शृणुतं युवां सालोहितौ द्वौ। अयमेकः। इमौ द्वौ। अहमेक एव। तत्त्रय-

1 Ms. ०वस्तन्य  2 150a, l. 1-2: གསོལ་བའི་ལས་མི་འཁྲུགས་པ།

मित्येषा[1] ज्ञप्तिः। ततो द्वौ भागावात्मना गृहीत्वा तयोरेको दत्तः। [तौ कथयतः][2] स्थविर स एवास्माकं कलिः संवृत्तः। त्वमेवास्माकं भाजय। स भाजयितुमारब्धः। तत्राप्येकः पटकोऽतिरिक्तः। तमप्यादाय पटकानां भारं बद्ध्वा संप्रस्थितः। ततोऽनुपूर्वेण श्रावस्तीमनुप्राप्तः। भिक्षुभिर्दृष्ट उक्तश्च। भदन्तोपनन्द कस्त्वया पश्चाच्छिराशयनो दृष्टः[3]। तेन यथावृत्तं विस्तरेण समाख्यातम्। ते कथयन्ति। कल्पते तवैवं कर्तुम्। अमित्राणां पादं गले दत्त्वा। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवान् संलक्षयति। यः कश्चिदादीनवो भिक्षवः परकीये[4] लाभे सन्निपतन्ति। तस्मान्न भिक्षुना परकीये लाभे सन्निपतितव्यम्। सन्निपतति। सातिसारो भवति। भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पृच्छन्ति। पश्य भदन्त आयुष्मता उपनन्देन तन्महल्लद्वयं धर्ममुखिकया व्यंसितम्[5]। भगवानाह। न भिक्षव एतर्हि यथा अतीतेप्यध्वन्यनेन महल्लद्वयं व्यंसितम्। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्नदीतीरे उद्रद्वयं प्रतिवसति[6]। तद्यदा जलेन गच्छति[7] तदा मत्स्याः स्थलमभिरुहन्ति। यदा

1 Ms. तत्रयमि० ; 150a, l. 4 : དེ་ལྟར་ན་གསུམ་གསུམ་མོ།

2 150a, l. 5 : དེ་གཉིས་ཀྱིས་སྨྲས་པ།

3 150a, l. 7 : ཁྱོད་ཀྱིས་སུ་ཞིག་ཤི་བ་མཐོང་། (=कस्त्वया मृतः दृष्टः)

4 Ms. परकीयेन ; 150b, l. 2 : གཞན་གྱི་རྙེད་པ་ལ་ཐོབ་རྒྱལ་བྱེད་པ།

5 150b, l. 4 : ཆོས་ཀྱི་སྒོ་ནས་བསླུས་པ། =वञ्चितम्

6 Ms. ०वसतः

7 Ms. गच्छतः

तु स्थलेन गच्छति तदा मत्स्या जले निपतन्ति । न किञ्चिदर्घं[1] साधयन्ति । ततस्तैः सामीचिः[2] कृता । एकोऽस्माकं जलेन गच्छतु द्वितीयः स्थलेन । यत्संपद्यते तदस्मात् सामान्यमिति । तत्रैको जलेन संप्रस्थितो द्वितीयः स्थलेन । तत्र ये जलस्थेन मत्स्याः संत्रासिताः स्थलमभिरोहन्ति । तान्स्थलस्था प्रघातयति जल-स्थाञ्जलस्थ एव । यावन्मत्स्यानां महानुराशिः संवृत्तः । एकः कथयति । त्वं भाजय । द्वितीयः कथयति । नाहं भाजयामि । किमर्थम् । मा मे प्रत्यवायः[3] स्यात् । सोऽपि कथयति । यद्यप्येवं ममाप्येव एष दोषः । तौ चिन्तापरौ व्यवस्थितौ । यावत् पूर्णमुखो नाम शृगालस्तयोः सकाशमुपसंक्रान्तः । स कथयति । भागिनेयौ किं चिन्तापरस्तिष्ठतः । मातुल अस्माकं मत्स्याः सम्पन्नाः । किं न भाजयथः । मातुल [3]प्रत्यवायभयात् । युवां [3]प्रत्यवायभीरूकौ किमिच्छथः । पूर्णमुख ऊर्ध्वपादोऽवाङ्मुखो नरकं पतिष्यतीति । पूर्णमुखः संलक्षयति । सहितावेतौ भेत्तव्यावेति । ततस्तयोर्ध्रुवप्रचार कल्पकारं[4] दृष्ट्वा एकस्य सकाशमुपसंक्रम्य पृच्छति । भागिनेय त्वयात्र किं कृतम् । मातुल अहं जलेन गतः । ये मया जलेन गच्छता मत्स्याः सन्त्रासिताः स्थलमभिरूढाः ते अनेन प्रघा-तिताः । भागिनेय यदि जलगमनेन किञ्चित्संपद्येत पूर्णमुखो नित्यं जलेन यायात् । तस्य स्थलेन गच्छता स्थाणुभयं कण्टकभयं

1 150b, l. 7: ཅུང་ཟད་ཀྱང་མི་རྙེད། =किञ्चिदल्पमपि साधयन्ति ।

2 *Ibid.*, གྲོས་བྱས་པ = consulted, arranged.

3 See above, p. 100, n. 2.

4 Ms. कच्छा

श्वापदभयं कूलपातभयम्। अपि तु यद्यसौ न प्रतिघातयति किं त्वं त्रासयित्वा करोषि। सर्वथा येऽत्र मत्स्याः सम्पन्नास्ते तस्यानुभावान्न तव। यदसौ ददाति स ग्रहीतव्यो नो तु विचारयितव्यः। स तेनाभ्याहतः प्रतिभिन्नस्तूष्णीमवस्थितः। ततो द्वितीयस्य सकाशमुपससंक्रम्य कथयति। भागिनेय त्वयात्र किं कृतम्। मातुलोऽहं स्थलेन गतो मया स्थलमभिरूढा मत्स्याः प्रतिघातिताः। भागिनेय यदि स्थलगमनेन किञ्चिल्लभ्येत पूर्णमुखो नित्यमेव स्थलेन यायात्। तस्य जलेन गच्छता ऊर्मिभयं कूर्मभयं शिशुमारभयं कुम्भीरभयं जालभयम्। अपि तु यद्यसौ न सन्त्रासयति कथं त्वं प्रघातयसि। सर्वथा ये तु मत्स्याः सम्पन्नास्ते तस्यानुभावात्। यदसौ[1] ददाति स ग्रहीतव्यो नो तु विचारयितव्यः। स तेनाभ्याहतः प्रतिभिन्नस्तूष्णीमवस्थितः। पूर्णमुखः कथयति। भागिनेय अस्त्यन्य उपायः। गाथाभिगीतेन तान्[2] भाजयामः। अकोप्यं भविष्यति। तौ पूर्वमेवाभ्याहतौ कथयतः। मातुल यथेच्छसि तथा कुरु। पूर्णमुखेन त्रयो भागाः कृताः। पुच्छानामेको मत्स्यराशिः [शिरसां] द्वितीयो मध्यमखण्डानां तृतीय इति। गाथां च भाषते।

स्थलचारिणो हि लाङ्गूलं शिरो गम्भीरचारिणः।
यस्तु मध्यमको गण्डः[3] धर्मस्थस्तं हरिष्यति[4] ॥ इति ॥

1 Ms. यद्यसो

2 Ms. स्तेन

3 152a, l. 5 : བར་གྱི་ལུས།

4 Ms. धर्मस्य हरिष्यतीति *Ibid.* དེ་ནི་ཆོས་ལ་གནས་པས་བཀུར།

पूर्णमुखः संलक्षयति । व्यंसितावेतौ । संपन्नो मे लाभः । स महतो रोहितस्य मत्स्यस्य मध्यगण्डमादाय[1] पितुः सकाशमुपसंक्रान्तः। ततोऽस्य माता परितुष्टा गाथाभिगीतेन परिपृच्छति ।

कुतस्त्वं पूर्णिक एषि कुत एषि सुपूर्णिक ।
अशिरस्कमलाङ्गूलं मत्स्यमादाय रोहितम् ॥ इति ॥

स कथयति ।

विवदन्ते येन मूढा धर्मा[ध]र्मेष्वकोविदाः ।
अल्पेच्छास्तेन[2] जीवन्ति राजकोषश्च वर्धते[3] ॥ इति ॥

सापि पुनर्गाथां भाषते।

साधु ते सुपराक्रान्तं पूर्णिक प्रियदर्शन ।
त्वं च लाभेन संयुक्तस्तौ चापि परितोषितौ ॥ इति ॥

किं मन्यध्वे भिक्षवः । योऽसौ पूर्णमुखः शृगाल एष एवासौ उपनन्दः । तेन कालेन तेन समयेन यौ तावुद्रावेतौ तौ[4] महल्लौ । तदाप्यनेन तौ व्यंसितावेतर्ह्यपीति[5] ।

श्रावस्त्यां निदानम् । अन्यतमस्मिन्कर्वटके [गृहपतिः ] । तेन विहारः कारितः । तत्र भिक्षुशतं वर्षा उपगतम्[6] । तस्य गृहपतेर्बुद्धिरुत्पन्ना पटकशतं समुदानयामि । भिक्षुसंघं भोजयित्वा प्रत्येकमेकैकं भिक्षुं पटेनाच्छादयिष्यामीति । यावदुपनन्देन श्रुतम् । अमुको गृहपतिर्भिक्षुसंघं भोजयित्वा प्रत्येकमेकैकं भिक्षुं पटेनाच्छादयिष्यतीति । श्रुत्वा च पुनः संलक्षयति । न भवाम्युपनन्दो यदि

1 Ms. inserts here स । 2 152b, l. 1: དེས་ནི་ཚོག་ཤེས ། 3 Ms. वर्धति । 4 Ms. तावुद्रावेतावेतौ 5 Ms. ०प्येति 6 Ms. ०गतः

तस्मात्पटकं न निष्पादयामीति । सोऽनिमन्त्रित एव गतः । गृहपतिर्भिक्षुसंघं भोजयित्वा चारयति[1] । उपनन्दः पटकं गृहीत्वा लघुलघ्वेव[2] प्रक्रान्तः । यावदेकस्य भिक्षोः पटको नास्ति । गृहपतिः कथयत्यार्य पटकशतं मया सुगणितमानीतम् । मा केनचिदार्येण पटद्वयं गृहीतं भवेदिति । भिक्षवः कथयन्ति । गृहपते कोऽसावेवं करिष्यति । अपि तु भदन्तोपनन्दस्त्वयोपनिमन्त्रितः । आर्य नाहमुपनिमन्त्रयामि । स तं पटकमादाय प्रक्रान्तः । ततोऽसौ गृहपतिरवध्यायितुमारब्धः । एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति । भगवानाह[3] । यः कश्चिदादीनवो भिक्षवोऽनिमन्त्रिताः परकीये[4] लाभे संनिपतन्ति । तस्मान्न भिक्षुणाऽनिमन्त्रितेन परकीये लाभे संनिपतितव्यम् । संनिपतति । सातिसारो भवति ।

भिक्षवः संशयजाताः । सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । पश्य भदन्त आयुष्मानुपनन्दोऽनिमन्त्रित एव परकीये लाभे संनिपतित इति । भगवानाह । न भिक्षव एतर्हि । यथा अतीतेप्यध्वन्युपनन्दोऽनिमन्त्रितः परकीये लाभे संनिपतितः । तच्छ्रूयताम् ।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्कर्वटके ब्राह्मणः पर्षन्महत्तरः[5] । तेन माणवशतं त्रैमासीमुपनिमन्त्र्य माणवशतं भोजिताम्[6] । तस्य बुद्धिरुत्पन्ना प्रत्येकमेकैकं माणवकं पटेनाच्छादयिष्यामीति ।

1 153a. l. 1: འགྲིམས་པ། =walk round.
2 Ms. लघुलघ्व
3 153a. l. 5: དགོངས་པ =संलक्षयति ।
4 Ms. ०कीयेन
5 153b. l. 2: འཁོར་ལ་དབང་སྒྱུར་བ།
6 Ms. भोजिताः

तस्य नातिदूरे वृद्धो ब्राह्मणः प्रतिवसति । तेन श्रुतम् । स प्रथमतरं वृद्धान्ते भुक्त्वा पटमादाय प्रक्रान्तः । गृहपतिना पटकाश्छोरिताः । यावदेकस्य माणवकस्य पटो नास्ति । स पृच्छति । भवन्तो मया पटकशतं सुगणितमानीतम् । मा केनचिन्माणवकेन पटकद्वयं गृहीतं भवेदिति । ते कथयन्ति । क एवं करिष्यति । अपि तु त्वया वृद्धो ब्राह्मण उपनिमन्त्रितः । नाहमुपनिमन्त्रयामि । स तं पटकमादाय प्रथमतरं प्रकान्तः । स ब्राह्मणोऽवध्या[यि]तुमारब्धः ।

किं मन्यध्वे भिक्षवः । योऽसौ ब्राह्मणो वृद्धः एष एवासावुपनन्दस्तेन कालेन तेन समयेन । तदाप्येषोऽनिमन्त्रितः परकीये लाभे संनिपतित एतर्ह्यपीति ।

श्रावस्त्यां निदानम् । अन्यतमस्मिन्कर्वटके गृहपतिः । तेन विहारः कारितः । तत्रैको भिक्षुर्वर्षा उपगतः । स उत्थानसंपन्नः[1] । तेनासौ विहारः प्रतिदिनमुपलिप्तसंमृष्टः क्रियते । प्रतिपत्त्येवासौ विहारः शोभने विविक्तावकाशे च भूभागे प्रतिष्ठापितः नानावृक्षोपशोभिते हंसक्रौंचमयूरशुकशारिकाकोकिलाभिनिकूजिते विविधपुष्पफलोपशोभिते । यावद्विस्तीर्णविभवः सार्थवाहस्तस्मिन्विहारे रात्रिवासमुपगतः । तेन तां विहारशोभामुपवनशोभां च दृष्ट्वाभिप्रसन्नेनादृष्ट्वैव भिक्षुसंघमुदिश्य प्रभूतो लाभः प्रेषितः । स रात्रमेवोत्थाय प्रक्रान्तः । स भिक्षुः कौकृतिकः संघस्यायं लाभ इति कौकृत्या न गृह्णाति । भिक्षूनेव समन्वेषते भाजयितुम् । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति । भग-

1 154a, l. 3: དེ་སྐྱོང་བ་ཕུན་སུམ་ཚོགས་པ། =उत्थापनत्रयसम्पन्नः

वानाह । गोमयगृहमपि चेद्भिक्षुर्निश्रुत्य वर्षा उपगतो भवति तत्र चेद्ब्राह्मणगृहपतयः संघमुद्दिश्य लाभमनुप्रयच्छन्त्यल्पं वा प्रभूतं वा यस्तत्र वसति एको वा द्वौ वा संबहुला वा तेषामेव सः[1] । नात्र कौकृत्यं करणीयम् ।

उद्दानम् ।
भिन्नानां देयप्रत्यंशं[2] ऋषिलस्य[3] च चारिकाम् ।
संघस्य चीवरं चैव अष्टौ लाभेन कारयेत् ॥

श्रावस्त्यां निदानम् । आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति । अन्तर्वर्षे भदन्त संघो भिद्येत । देयो लाभो न देयः । भगवानाह । कस्यचिदुदालिन् देयः कस्यचिन्न देयः । [कस्य देयः] । धर्मपाक्षिकस्य ॥१॥ अन्तर्वर्षे भदन्त भिक्षुः शिक्षां प्रत्याख्याय हानायावर्तते । देयो लाभो न देयः । कस्यचिदुदालिन् देयः कस्यचिन्न देयः । कस्य देयः । यद्भूयोऽपि[4] तस्य ॥२॥ अन्तर्वर्षे भदन्त भिक्षुः कालं कुर्यात् । देयो लाभो न देयः । कस्यचिदुदालिन् देयः कस्यचिन्न देयः । कस्य देयः । यद्भूयोपि तस्य ॥३॥

अन्यतमस्मिन् कर्वटके गृहपतिः । तेन विहारः कारितः सर्वोपकरणसंपन्नः । आयुष्मांश्च शारिपुत्रो जनपदचारिकां चरन् तं विहारमनुप्राप्तः । तेन गृहपतिना भोजयित्वा पंचभिः पटकशतैराच्छादितः । स तानि पंच पटकशतानि तस्मिन्नेव विहारे दत्त्वा प्रकान्तः । यावत्तस्य द्वौ सार्धंविहारिणौ ऋषिल[3] ऋषिदत्तश्च जनपदचारिकां चरन्तौ तमेव कर्वटकमनुप्राप्तौ । तावपि तेन

1 Ms. तम्   2 154b, l. 4 : སྐལ་བ །   3 Ms. रिषिल

4 155a, l. 1 : གང་ཡུན་རིང་དུ་གནས་པ་པའི །=who was there for a long time.

गृहपतिना भोजयित्वा पंचभिः पटशतैराच्छादितौ। तौ भिक्षुभिरुच्येते। आयुष्मन्तौ युवयोरुपाध्यायेन तस्य गृहपतेः सकाशात्पञ्च पटशतानि लब्धानि। तान्यस्माभिरेव भाजितानि। अधुनाप्येष लाभोऽस्माकमेव प्राप्यते। तौ कथयतः। उपाध्यायो ज्ञातो महापुण्यः। तेन कदाचिद्युष्माकमेवानुमोदितः स्यात्। ते प्रतिबोढुमारब्धाः[1]। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। अष्टाविमे भिक्षवो लाभाः। कतमेऽष्टौ। सीमाहृतो लाभः। क्रियाहृतः। निश्रयाहृतः। संघप्रज्ञप्तः। भिक्षुप्रज्ञप्तः। वार्षिकः। संमुखः। प्रत्यादेशश्च।

सीमाहृतो लाभः कतमः। यथापि तद्देवावसथ एकः पोषधः।[2] तयोर्विहारयोर्यो लाभः स उभयविहारप्रतिवासिनां भिक्षूणाम्। तन्निवासिनो भिक्षवः कदाचिद्धि एकपोषधेन[3] वर्षा उपगच्छन्ति। तत्र यो लाभः संपद्यते यमस्मिन्नेव विहारे दत्तस्तस्मिन्निवासिभिरेव भिक्षुभिः परिभोक्तव्यं हि। एकपोषधात्वदयमुच्यते सीमाहृतो लाभः।

क्रियाहृतो लाभः कतमः। यथापि तद्भिक्षव इदमेवं रूपं क्रियाकारं कृत्वा वर्षा उपगच्छन्ति। अमुकं कुलं युष्माकम्।

1 155b, l. 1: དེ་རྣམས་ཀྱིས་སླར་ལན་ཀླན་པར་བརྩམས་པའི་སྐབས་དེ།

2 Ms. यथापि तद्वाधावसथैरेव पोषधौ; 155b, l. 5: འདི་ལྟ་སྟེ་གནས་ཉིད་ལ། གསོ་སྦྱོང་གཅིག་ལ་སྟེ། གཙུག་ལག་ཁང་དེ་གཉིས་ཀྱི་ རྙེད་པ་གང་ཡིན་པ་དེ་ནི། Cf. Mahāvagga, ii. 8. 3: न भिक्खवे एकस्मिं आवासे द्वे उपोसथागाराणि सम्मन्नितब्बानि।

3 Ms. द्विरूकपोषधे न; 155b, l. 5: ཀྱི་ལ་གསོ་སྦྱོང་ཐ་དད་པར་དམ་བཅས་ན།

अमुकं कुलमस्माकम् । रथ्यावीथीचत्वरशृङ्गाटका मध्यमिति । ते चेद्ब्राह्मणगृहपतयः उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति । उपगतकानामेव पानीयम्[1] । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥१॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति । अनुपगतकानां पानीयम् । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥२॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां पानीयमनुप्रयच्छन्ति । अनुपगतकानां लाभम् । [लाभः] कस्य प्रापद्यते । उपगतकानामेव[2] ॥३॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वानुपगतकानां लाभमनुप्रयच्छन्ति । अनुपगतकानां पानीयम् । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥४॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा वृद्धान्ते लाभमनुप्रयच्छन्ति । उपगतकानां पानीयम् । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥५॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति । वृद्धान्ते पानीयम् । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥६॥ उपगतमानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा वृद्धान्ते लाभमनुप्रयच्छन्ति । अनुपगतकानां पानीयम् । लाभः कस्य

1 156a, l. 3 : དམ་མ་བཅས་པ་རྣམས་ལ་ཆུ་དྲངས་ན །

2 Tib. marks here section thus : འདུལ་བ་གཞི ། བམ་པོ་རེ་ལྔ་པ །
See above, p. 91.

प्रापद्यते । उपगतकानामेव ॥७॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा अनुपगतकानां लाभमनुप्रयच्छन्ति । वृद्धान्ते पानीयम् । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥८॥ उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानुपगतकानां लाभमनुप्रयच्छन्ति । वृद्धान्ते च पानीयम्[1] । लाभः कस्य प्रापद्यते । उपगतकानामेव ॥९॥[2]

यथा उपगतकानामावासी उपगतकानुपगतकान्भिक्षून्भोजयित्वे[ति] नव पर्यायाः । एवमनुपगतकानामावासी उपगतकान्भिक्षून्भोजयित्वेति नव पर्यायाः ।

सचेत्ते ब्राह्मणगृहपतयः रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति । उपगतकानामेव पानीयम् । लाभः कस्य प्रापद्यते । उभयोरपि ॥१॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति । अनुपगतकानां पानीयम् । लाभः कस्य प्रापद्यते । उभयोरपि ॥२॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा[3] अनुपगतकानां लाभमनुप्रयच्छन्ति । उपगतकानां पानीयम् । लाभः कस्य प्रापद्यते । उभयोरपि ॥३॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकान्भिक्षून्भोजयित्वा [4]अनुपगतकानां लाभमनुप्रयच्छन्ति । अनुपगतकानामेव पानीयम् ।

1 157a. l. 1 : Tib. puts it thus : भोजयित्वा वृद्धान्ते पानीयम् । लाभः कस्य प्रापद्यते ।

2 The figures have been supplied by us.

3 Ms. ०न्त्यनुप०

4 Ms. उप०

लाभः कस्य प्रापद्यते। उभयोरपि ॥४॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा वृद्धान्ते[1] लाभमनुप्रयच्छन्ति। उपगतकानां पानीयम्। लाभः कस्य प्रापद्यते। उभयोरपि ॥५॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा उपगतकानां लाभमनुप्रयच्छन्ति। वृद्धान्ते पानीयम्। लाभः कस्य प्रापद्यते। उभयोरपि ॥६॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा वृद्धान्ते लाभमनुप्रयच्छन्ति। अनुपगतकानां पानीयम्। लाभः कस्य प्रापद्यते। उभयोरपि ॥७॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा अनुपगतकानां लाभमनुप्रयच्छन्ति। वृद्धान्ते पानीयम्। लाभः कस्य प्रापद्यते। उभयोरपि ॥८॥ रथ्यावीथीचत्वरशृङ्गाटकेषु उपगतकानुपगतकान्भिक्षून्भोजयित्वा वृद्धान्ते [उपगतकानुपगतकानां] लाभमनुप्रयच्छन्ति। वृद्धान्ते च[2] पानीयम्। लाभः कस्य प्रापद्यते। उभयोरपि ॥९॥ अयमुच्यते क्रियाहृतो लाभः।

निश्रयाहृतो लाभः कतमः। भिक्षुर्यं स्त्रीपुरुषपंडकमुपनिश्रित्य वर्षा उपगच्छति स यं लाभं ददाति तस्यैव सः। अयमुपच्यते निश्रयाहृतो लाभः।

संघप्रज्ञप्तो लाभः कतमः। यो लाभो नियतोऽविपंचितः। अयमुच्यते संघप्रज्ञप्तो लाभः।

1 157a, l. 3: རྒན་པའི་མཐར་ལོ་གསུ།

2 Ms. अनुपगतकानां पागीयम्; 158a. l. 4: Tib. puts it thus: भोजयित्वा वृद्धान्ते लाभमनुप्रयच्छन्ति। वृद्धान्ते च पानीयम्।

भिक्षुप्रज्ञप्तो लाभः कतमः। यो लाभो नियतो विपंचितः[1]। लयने मठे[2] वा कूटागारे वा प्रज्ञप्तः। तत्र यो भिक्षुः प्रतिवसति तस्यैव सः। अयमुच्यते भिक्षुप्रज्ञप्तो लाभः।

वार्षिको लाभः कतमः। यो लाभो वर्षोषितस्य भिक्षु-संघस्य दायिकैः प्रज्ञप्तः। अयमुच्यते वार्षिको लाभः।

संमुखलाभः कतमः। यो लाभोऽनियतोऽविपंचितः[3]। अयमुच्यते संमुखलाभः।

प्रत्यादेशलाभः कतमः। यो लाभो जातौ बोधौ धर्मचक्रे परिनिर्वाणे निर्यातितः। स चेन्न शक्यते चतुर्महाचैत्येषु एकस्मिन्नेव महाचैत्ये देयो नान्यत्र। अयमुच्यते प्रत्यादेशलाभः।

उद्दानम्।

कालं कुर्वन्त्युत्क्षिप्तका मिश्रकाणां च भाजनम्।
उत्क्षिप्तश्रमणोद्देशा उसारयन्ति[4] म्रियन्ते च ॥

श्रावस्त्यां निदानम्। आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। यथापि तद्भदन्त एकस्मिन्नावासे संबहुला उत्क्षिप्तकाः संबहुलाश्च प्रकृतिस्थकाः प्रतिवसन्ति। तेषामुत्क्षिप्तकः कालं करोति। तत्सन्तको मृतपरिष्कारो लाभः कस्य प्रापद्यते। प्रकृतिस्थकाना-

1 158b, l. 1: ངེས་ལ་དམིགས་ཀྱིས་བྱེ་ནས ། Cf. *Divyā.*, p. 475: विपञ्चिकः=sooth-sayer; *Mvyut.* 126,34: विपञ्चितज्ञाः।

2 *Ibid.* གནས་ཁང་པའི་འོ ། ཡང་ཐོག་པའི་འོ ། ཁང་པ་བརྩེགས་པའི་འོ །

3 159b, l. 4: མ་ངེས་ལ་དམིགས་ཀྱིས་མ་བྱེ་བའི་སྟེ །

4 Cf. *Mahāvbgga*, ix. 4: ओसारणा ; सु+ओसारितो=सोसारितो ; vide my *Early Monastic Buddhism*, I, p. 302.

मुदालिन् ॥१॥[1] द्वौ भदन्त उत्क्षिप्तकौ संबहुलाः प्रकृतिस्थकाः । उत्क्षिप्तकः कालं करोति । तत्सन्तको मृतपरिष्कारो[2] लाभः कस्य प्राप्यते । प्रकृतिस्थकानामेव ॥२॥ उत्क्षिप्तकाः संबहुलाः प्रकृतिस्थका अल्पाः । उत्क्षिप्तकः कालं करोति । [तत्सन्तको मृतपरिष्कारो] लाभः कस्य प्राप्यते । प्रकृतिस्थकानामेव ॥३॥

यथापि तद्भदन्त एकस्मिन्नावासे संबहुला उत्क्षिप्तकाः संबहुलाश्च प्रकृतिस्थकाः प्रतिवसन्ति । तेषां प्रकृतिस्थकः कालं करोति । तत्सन्तको मृतपरिष्कारो लाभः कस्य प्राप्यते । प्रकृतिस्थकानाम् ॥१॥ संबहुला उत्क्षिप्तका द्वौ प्रकृतिस्थकौ । प्रकृतिस्थकः कालं करोति । तत्सन्तको मृतपरिष्कारो लाभः कस्य प्राप्यते । तस्यैकस्य प्रकृतिस्थकस्य ॥२॥ संबहुला उत्क्षिप्तका एकः प्रकृतिस्थकः । [प्रकृतिस्थकः] कालं करोति । लाभः कस्य प्राप्यते । उत्क्षिप्तकानां यः प्रथमं पापकं दृष्टिगतं प्रतिनिसृजति ॥३॥

[3]उपगतकानामावासे अनुपगतकः श्रामणेरक आगत्य कालं करोति । उपगतकैरनुपगतकानां दूतोऽनुप्रेषयितव्यः । श्रामणेरो वः कालगतः । हरत तस्य पात्रचीवरमिति । उपगतका भाजयन्ति । अभाजितं दुर्भाजितम् । अनुपगतका भाजयन्ति । भाजितं सुभाजितम् । मिश्रका भाजयन्ति । अभाजितं दुर्भाजितम् । चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति । [4]सुपरिणा-

1 The figures have been supplied by us.

2 Ms. ०परिष्कारः को लाभः

3 159*a*, l. 3: དམ་བཅས་པ །=to make a promise.

4 Ms. अपरि०

मितम् ॥१॥ उपगतकानामावासे अनुपगतकः श्रामणेरक आगत्य एवं वदेदोसारयन्तु[1] मामायुष्मन्तः। उपगतको भविष्यामीति। स चानोसारितः कालं कुर्यात्। उपगतकैरनुपगतकानां दूतोऽनुप्रेषयितव्यः। श्रामणेरो वः कालगतः। हरतास्य पात्रचीवरमिति। उपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। अनुपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं [दुर्भाजितम्।] चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम् ॥२॥ उपगतकानामावासे अनुपगतको भिक्षुरागत्य कालं कुर्यात्। उपगतकैरनुपगतकानां दूतोऽनुप्रेषयितव्यः। सब्रह्मचारी वः कालगतः। हरतास्य पात्रचीवरमिति। उपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। अनुपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं दुर्भाजितम्। चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम् ॥३॥ उपगतकानामावासे अनुपगतको भिक्षुरागत्यैवं वदेदोसारयन्तु मामायुष्मन्तः। उपगतको भविष्यामीति। स चानोसारित एव कालं कुर्यात्। उपगतकैरनुपगतकानां दूतोऽनुप्रेषयितव्यः। सब्रह्मचारी वः कालगतः। हरतास्य पात्रचीवरमिति। उपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। अनुपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं दुर्भाजितम्। चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम्[2] ॥४॥

1 159b, l. 6: བདག་དྲང་དུ་གསོལ། =to draw, to pull. 2 Ms. सुभाजितम्

अनुपगतकानामावासे उपगतकः श्रामणेर आगत्य कालं कुर्यात्। अनुपगतकैरुपगतकानां दूतोऽनुप्रेषयितव्यः। श्रामणेरो वः कालगतः। हरतास्य पात्रचीवरमिति। अनुपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। उपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं दुर्भाजितम्। चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम् ॥१॥ अनुपगतकानामावासे उपगतकः श्रामणेर आगत्यैवं वदेदोसारयन्तु मामायुष्मन्तः। अनुपगतको भविष्यामीति। स चानोसारितः कालं कुर्यात्। अनुपगतकैरुपगतकानां दूतोऽनुप्रेषयितव्यः। श्रामणेरो वः कालगतः। हरतास्य पात्रचीवरमिति। अनुपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। उपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं दुर्भाजितम्। चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम् ॥२॥ अनुपगतकानामावासे उपगतको भिक्षुरागत्य कालं कुर्वीत। अनुपगतकैरुपगतकानां दूतोऽनुप्रेषयितव्यः। सब्रह्मचारी वः कालगतः। हरतास्य पात्रचीवरमिति। अनुपगतका भाजयन्ति। अभाजितं दुर्भाजितम्। उपगतका भाजयन्ति। भाजितं सुभाजितम्। मिश्रका भाजयन्ति। अभाजितं दुर्भाजितम्। चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति। सुपरिणामितम् ॥३॥ अनुपगतकानामावासे उपगतको भिक्षुरागत्यैवं वदेदोसारयन्तु मामायुष्मन्तः। अनुपगतको भविष्यामीति। स चानोसारितः कालं कुर्यात्। अनुपगतकैरुपगतकानां दूतोऽनुप्रेषयितव्यः। सब्रह्मचारी वः कालगतः। हरतास्य पात्र-

चीवरमिति । अनुपगतका भाजयन्ति । अभाजितं दुर्भाजितम् । उपगतका भाजयन्ति । भाजितं सुभाजितम् । मिश्रका भाजयन्ति । अभाजितं दुर्भाजितम् । चातुर्दिशाय भिक्षुसंघाय परिणामयन्ति । सुपरिणामितम् ॥४॥

उद्दानम् ।

उपनन्दस्याधिष्ठानं [1]धातव्यं मध्यविक्षेपः ।
नास्ति ममात्ययाह्वानं विसृज्यो मनुष्यास्त्रयः ॥

श्रावस्त्यां निदानम् । उपनन्दस्य मूर्ध्नि पिटको जातः । स वैद्यसकाशं गतः । भद्रमुख भैषज्यं मे व्यपदिशेति । स कथयति आर्य घृतस्य पानं पिब । स्वास्थ्यं ते भविष्यतीति । उपनन्दः संलक्षयति । सचेदद्यैव [2]पास्यामि अद्यैव स्वस्थो भविष्यामि । श्वः[3] कतरेण कल्पेन घृतं समाधापयिष्यामि वस्त्राणि वा । यावदिष्टं[4] कल्पं समाधापयिष्यामि तावत्पश्चात्पास्यामीति[5] । ज्ञातमहापुण्योऽसौ । तेन सार्धंविहार्यन्तेवासिकाः समन्तात्प्रेषिताः । तैः प्रभूता घृतघटका वस्त्राणि च व्रणबन्धनाय समाधापितानि । द्वितीये दिवसे वैद्य आगत्य पृच्छति । आर्य स्वस्थः । पीतं ते घृतम् । भद्रमुख न पीतम् । आर्य न शोभनं[6] कृतम् । अद्य द्विगुणं पिबेति । सार्धंविहार्यन्तेवासिन उक्ताः । श्रुतं वो यद्वैद्येनाभिहितम् । उपाध्याय

1 161b, l. 5: བརྟག་ [xyl. བརྟང་]བྱ་དང་།

2 Ms. दास्यामि ; 161b, l. 7: འཐུངས་ནས། 3 Ms. स्व ; 161b, l. 7: སང་།

4 Ms. समन्वेष्टः

5 162a, l. 1: རེ་ཞིག་བསྒྲུངས་ལ་ཕྱི་ནས་ བཏུང་བར་འགྱུར་བར་བྱའོ།

6 Ms. आर्येन शोभनं

श्रुतम्। ममायं रोगोऽभिवृद्धः। प्रभूतं घृतं वस्त्राणि च व्रणबन्धनानि समाधापयतेति। तैः प्रभूततरं घृतं वस्त्राणि च समाधापितानि। तेनातिलोभात् श्वः कल्पो[1] भविष्यतीति तदपि दिवसे न पीतम्। रोगोऽस्य प्रबलो जातः। यावत्पुनरपि वैद्य आगत्य पृच्छति। आर्य पीतं घृतम्। भद्रमुख न पीतम्। आर्य न शोभनं कृतम्। स कथयति। भद्रमुख अद्य त्रिगुणं पिबामि। वैद्यः कथयति। आर्य यदि घृतमञ्जूषायामपि निमग्नस्तिष्ठसि तथापि ते नास्ति जीवितमिति। [स कथयति।][2] यमदण्डिक यादृशस्त्वम्। गले ते पादं दत्त्वा घृतं च पिबामि। जीवामि चेति। स वैद्यो हुमिति कृत्वा सामर्षः प्रक्रान्तः। तत उपनन्देन घृतस्य पात्रं पूरयित्वा पीतम्। विषूचितः कालगतः। तस्य प्रभूतं सुवर्णं तिस्रः सुवर्णलक्षाः[3]। एका पात्रचीवरात्। द्वितीया ग्लानभैषज्यात्। तृतीया कृताकृतात्। अमात्यैः श्रुतम्। राज्ञे निवेदितम्। देव आर्योपनन्दः कालगतः। तस्य प्रभूतं सुवर्णमस्ति। तिस्रः सुवर्णलक्षाः[3]। तदर्हस्याज्ञां दातुमिति। राजा कथयति। यद्येवं गच्छत। अस्य लयनं मुद्रयतेति। भिक्षवस्तमादाय दहनं गताः। तैरागत्य लयनं मुद्रितम्। भिक्षवस्तमादहने संस्कार्य विहारमागताः। पश्यन्ति लयनं राजमुद्रामुद्रितम्। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द मद्वचनाद्राजानं प्रसेनजितमारोग्यं

1 Ms. लोभाच्छ्वकल्पो ; 162a, l. 5: དེ་སང་གི་ཐབས་ལ་ཆགས་པར་གྱུར་པས །

2 162b, l. 1: Tib. adds here དེས་སྨྲས་པ །

3 Ms. ०लक्ष्याः

[पृच्छ]। एवं च वद । यस्मिन् महाराज समये[1] तव राजकरणीयं भवति । अवलोकयसि त्वं तस्मिन् समये[1] उपनन्दं भिक्षुम् । यस्मिन् वा ते समये आवाहो वा विवाहो वा अवलोकयसि तस्मिन् समये उपनन्दम्। कदाचिद् वा ते उपनन्दो यावज्जीवं प्रवारितः[2] चीवर-पिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः । ग्लानस्य वा उप-स्थानं कृतमिति । यदि ब्रूयान्नेति । स वक्तव्यः । पृथङ्[3] महाराज गृहिणां गृहकार्याणि । पृथक् प्रव्रजितानाम् । अल्पोत्सुकस्त्वं तिष्ठ। सब्रह्मचारिणामेष लाभः प्रापद्यते। निरस्तव्यापारो भवेति। एवं भदन्त इत्यायुष्मानानन्दो भगवते प्रतिश्रुत्य येन राजा प्रसेनजित् कोसलस्तेनोपसंक्रान्तः। उपसंक्रम्य यथासन्दिष्टं निवेदितवान् । राजा कथयति । भदन्तानन्द यथा भगवानाज्ञापयति तथा भवतु । निरस्तव्यापारोऽहमिति । तत आयुष्मतानन्देन राज्ञः प्रतिसन्देशो भगवते निवेदितः। तत्र भगवान् भिक्षूनामन्त्रयते स्म। भाजयत यूयं भिक्षव उपनन्दस्य भिक्षोर्मृतपरिष्कारमिति । भिक्षुभिः संघमध्ये अवतार्य विक्रीय[4] भाजितम् । साकेतकैर्भिक्षुभिः श्रुतम् । उपनन्दः कालगतः । तस्य प्रभूतं सुवर्णं तिस्रः सुवर्णलक्षा भिक्षुभिर्भाजिता इति । ते त्वरमाणाः[5] श्रावस्तीमागताः कथयन्ति । अस्माकमपि भदन्तोपनन्दः सब्रह्मचारी। अस्माकमपि तत्सन्तको लाभः प्रापद्यत इति । भिक्षुभिः पातयित्वा तैः सार्धं पुनरपि भाजितः । एवं षण्[6]

1 Ms. समयेन
2 Ms. प्रचारितः
3 Ms. प्रथङ
4 144b, l. 7: བསྒྱུར་ནས་བགོས་སོ |=divided after transforming.
5 Ms. सत्वरमाणाः
6 Ms. षएणो

महानगरनिवासिनो भिक्षवः सन्निपतिताः । वैशालकाः वाराणसीयाः राजगृहेयकाः चाम्पेयिकाश्च । भिक्षुभिः पुनः पुनः पातयित्वा भाजितः । भिक्षवः पातयन्तो भाजयन्तश्च रिञ्चन्त्युद्देशं पाठं स्वाध्यायं योगं मनसिकारम् । एतत्प्रकरणं भगवत आरोचयन्ति । भगवानाह । पञ्च करणानि लाभविभागे । कतमे पञ्च । गण्डी त्रिदण्डकं चैत्यं शीलाका[1] ज्ञप्तिः पञ्चकम् । यो मृतगण्डयामाकोट्यमानायामागच्छति तस्य लाभो देयः । एवं त्रिदण्डके भाष्यमाणे चैत्यवन्दनायां क्रियमाणायां [1]शीलाका[यामा]चर्यमाणायाम् । तस्मात्तर्हि भिक्षवः सर्वं मृतपरिष्कारं ज्ञप्तिं कृत्वा भाजयितव्यम् । अकोप्यं भविष्यति । एवं च पुनः कर्तव्यम् । शयनासनप्रज्ञप्तिं कृत्वा पूर्ववद् यावत्सर्वसंघे सन्निषण्णे सन्निपतिते मृतपरिष्कारं वृद्धान्ते स्थापयित्वा एकेन भिक्षुणा वृद्धान्ते निषण्णेन ज्ञप्तिः कर्तव्या । शृण्वन्तु[2] भदन्ताः संघाः । अस्मिन्नावासे उपनन्दो भिक्षुः कालगतः । तस्येदं मृतपरिष्कारं दृश्यमदृश्यं चावतिष्ठते । सचेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत्संघ उपनन्दस्य भिक्षोर्मृ तद्रव्यं दृश्यमदृश्यं च मृतपरिष्कारिकमधितिष्ठे दित्येषाप्त ज्ञप्तिः । एषा भिक्षवो मृतपरिष्कारविभागनिष्ठा यदुत ज्ञप्तिः । ज्ञप्तौ कृतायां यो भिक्षुरागच्छति लाभो न देय इति । आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति । यत्र यत्र भदन्त संघवृत्तः ज्ञप्तिकारको नास्ति तत्र मृतपरिष्कारिकं भाजयितव्यम् । न भाजयितव्यम् । उदालिन्

1 Ms. शिलाका ; 164a, l. 2: ཚུལ་ཤིང་དང་།

2 Ms. श्रणोतु

पूर्वाचरमं[1] कृत्वा [भाजयितव्यम् ।] [1]पूर्वाचरममपि भिक्षवो न जानन्ति। भगवानाह । एकं परिष्कारं विक्रीय[2] ततः स्तोकं संघ-वृद्धाय संघनवकाय च दत्त्वा यथेष्टं भाजयितव्यम् । नात्र कौकृत्यं करणीयम् । ज्ञप्तौ च कृतायां[3] पूर्वाचरमे[1] वा मृतपरिष्कारिको लाभः सर्वबुद्धशिष्येभ्यः प्रापद्यत इति ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । पश्य भदन्तायुष्मानुपनन्दः अतिलोभेन विपन्नः[4] । भगवानाह । न भिक्षव एतर्हि यथा अतीतेऽप्यध्वनि अतिलोभेन विपन्नः[4] । तच्छ्रूयताम् ।

भूतपूर्वं भिक्षवोऽन्यतमेन लुब्धेन हस्ती सविषेण शरेण मर्मणि[5] ताडितः । ततस्तेन मर्मवेदनाभ्याहतेन शरानुसारेण गत्वा स लुब्धो जीविताद्व्यपरोपितः । यावद्दैवयोगा[त्] पञ्च-मात्राणि चौरशतान्यन्यतमं कर्वटकं मुषित्वा तं प्रदेशमनु-प्राप्तानि । तैरसौ हस्ती दृष्टः । स कृच्छ्रकालो वर्तते । ते कथयन्ति । भवन्तः सम्पन्नमिदं[6] मांसम् । अर्धतृतीयानि शतानि हस्तिनं विशस्य मांसं पचन्तु । अर्धतृतीयानि शतानि पानीयमानयन्त्विति । तत्र ये विशसन्ति पचन्ति च तेषा-

1 164b, l. 3-4: ཉེ་བར་འཁོར་ཐོག་མ་དང་ཐ་མར་བྱས་ནས་བགོ་བར་བྱའོ་དགེ་སློང་རྣམས་ཀྱིས་ཐོག་མ་དང་ཐ་མ་མ་ཤེས་ནས ། Cf. *Mvyut.*, 280. 71: पूर्वचरमं

2 164b, l. 4: སྒྱུར་ཏེ ; cf. p. 125 n. 4.

3 Ms. चक्रितायां

4 Ms. विपन्नाः

5 Cf. above, p. 12 n. 2

6 Ms. ०मिमं

मेतदभवत् । भवन्तोऽस्माभिरीदृशं कर्म कृतम् । इदं च लोप्त्रं[1] प्रभूतं संपन्नकम् । यावदाप्तं[2] मांसं भक्षयित्वा अवशिष्टं विषेण दूषयिष्यामः । किमर्थं तेषामनुप्रयच्छामः । [1]लोप्त्रमस्माकं भविष्यति । ते विषदूषितं मांसं भक्षयित्वा प्राणैर्वियोक्ष्यन्तीति । तैर्यावदाप्तं मांसं भक्षयित्वावशिष्टं विषेण दूषितम् । येऽपि पानीयस्य गतास्तैरप्येवमेव विचार्य यावदाप्तं पानीयं पीत्वावशिष्टं विषेण दूषितमादायागताः । यैर्मांसं भक्षितं तैः पानीयं पीतम् । यैरपि पानीयं पीतं तैरपि मांसं भक्षितम् । सर्वे ते कालगताः । यावदन्यतमः शृगालः कालपाशपाशितस्तं प्रदेशमनुप्राप्तः । तेन ते सर्वे मृता दृष्टाः । ततो लोभसौमनस्यः संलक्षयति । संपन्नो मे प्रभूतो लाभः । आनुपूर्वी कर्तव्या इति । स धनुषोऽटनिं मुखे प्रक्षिप्य स्नायुं भक्षयितुमारब्धः । ततः स्नायुश्छिन्ना । अटन्या तालु च्छिद्रितम् । कालगतः ।

देवता गाथां भाषन्ते ।

संचयः खलु कर्तव्यो न कार्यस्त्वतिसंचयः ।
पश्य संचयलोभान्धो हतश्च येन जम्बुकः ॥

किं मन्यध्वे भिक्षवो योऽसौ जम्बुक एष एवासावुपनन्दस्तेन कालेन तेन समयेन । तदाप्येषोऽतिलोभेन विपन्नः । एतर्ह्य पि एषोऽतिलोभेन विपन्न इति ।

श्रावस्त्यां निदानम् । तेन खलु समयेनान्यतमो भिक्षुराबाधिको दुःखितो बाढग्लानः । तस्य भिक्षुणा उपस्थानं कृतम् ।

1 Ms. लोप्तं ; 165a, l. 5: རྐུ་རྫས། =stolen goods. 2 165a, l. 7: ལྷག་པ་དེ་ལ།

तथापि कालगतः। तस्य पात्रचीवरं वृद्धान्ते नीतम्। तत्रैकं चीवरं केनापि[1] नाशितम्। मक्षिकाभिराकीर्णम्। ततश्चीवरभाजकेनासावुपस्थायिकोऽभिहितः। आयुष्मन्नलसस्त्वम्[2]। न त्वयैतच्चीवरं शोचितम्। शोचय। स कथयति। त्वं परिष्कारं भाजयिष्यसि। अहं शोचयिष्यामि। त्वमेव शोचय। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। ग्लानोपस्थायिकस्य षट् परिष्कारा दातव्याः। अवशिष्टं भिक्षुभिर्भाजयितव्यम्। उपस्थायिकाश्चेद्बहवो भवन्ति सर्वैः षट् परिष्काराः सामान्यं भाजयितव्याः।

अपरे भिक्षवो ज्ञातमहापुण्याः कालं कुर्वन्ति। तेषां बहवः परिष्काराः श्रामण्यपरिष्कारा जीवितपरिष्काराश्च। वृद्धान्तेऽभिरोहिताः। उक्तं भगवता। उपस्थायकेन षट् परिष्कारा ग्रहीतव्या इति। स विचार्य विचार्य प्रणीतानि गृह्णाति। भगवानाह। न प्रणीतानि दातव्यानि। भिक्षवो लूहानि ददति। भगवानाह। न लूहानि दातव्यानि। अपि तु मध्यानि दातव्यानीति।

ग्लानाः असंविदिता एव सांघिके शयनासने कालं कुर्वन्ति। भगवानाह। ग्लानोपस्थायकेन ग्लानस्य निमित्तं कुशलेन भवितव्यं मुहुर्मुहुः प्रत्यवेक्षितव्यं कृत्यस्य न हापयितव्यम्। शरीरावस्थां ज्ञात्वा पौद्गलिके शयनासने [3]व्याजेनावतार्य शायितव्य इति।

1 166a, l. 1: བཤང་གཅི་དག་གིས་འབགས་ཤིང་।=मूत्रपुरीषेणापि

2 166a, l. 2: ཁྱོད་ཀྱིས་རྒྱུད་ངན་བྱས་ཏེ།

3 Tib. omits व्याजेन

श्रावस्त्यां निदानम्। अन्यतमो भिक्षुर्ग्लानस्तेन शरीरावस्थां परिच्छिद्य[1] भिक्षुरभिहितः। यावदहं जीवामि तावदुपस्थानं कुरु। मदीयं पात्रचीवरं मृते[2] मयि तव यथासुखमिति। स तस्योपस्थानं कर्तुमारब्धः। यावदसौ भिक्षुः कालगतः। ततश्चीवरभाजकेनासौ उक्तः। आनय तस्य भिक्षोः पात्रचीवरम्। भाजयामि। स कथयति। ममैव तेन यथासुखं कृतमिति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। जीवन्नेवासौ भिक्षवो न ददाति। कुतः पुनर्मृतो दास्यति। नास्तीदं दानं ममात्ययादस्य भविष्यति। गृहीत्वा भाजयितव्यम्। तस्यात्र भिक्षोः सुप्रत्यंशो देय इति।

तेन खलु समयेनान्यतमो भिक्षुराबाधिको दुःखितो बाढग्लानः। स चाल्पज्ञातः। तस्य भैषज्यं नास्ति। तेन शरीरावस्थां परिच्छिद्य उपस्थायिकोऽभिहितः। मम नास्ति किंचित्। मामुद्दिश्य पूजां कुरुष्वेति। तेन प्रतिज्ञातम्। स कालगतः। अपायेषूपपन्नः। अथ भगवान् भिक्षूनामन्त्रयते स्म। योऽसौ भिक्षवो भिक्षुः कालगतः किं तेनोपस्थायिकोऽभिहितः। तैर्यथावृत्तमाख्यातम्। विनिपतितोऽसौ भिक्षवो भिक्षुः। यदि तस्य सब्रह्मचारिभिः रत्नत्रयपूजा कृताभविष्यत चित्तमस्याभिप्रसन्नमभविष्यत्। तस्मान्न भिक्षुणा ग्लानसब्रह्मचारी अध्युपेक्षितव्यः। ग्लानोपस्थायिको दीयते। तद्[3]यद्यस्य भैषज्यं नास्ति तं पृष्ट्वा

1 166b, l. 3: བརྟགས་ནས། =examining. 2 Ms. मृतेन

3 Ms. तयद्यस्य

दानपतयः समादापयितव्याः। सचेत्संपद्यत इत्येवं कुशलम्। नोचेत्संपद्यते सांघिकं देयम्। सचेत्संपद्यत इत्येवं कुशलम्। नोचेत्संपद्यते बुद्धाक्षयनीविसन्तकं[1] देयम्। सचेत्तदपि न संपद्यते यत्तथागतचैत्ये वा गन्धकुट्यां वा छत्रं वा ध्वजं वा पताका वा आभरणकं वा संघेन दानीयं[2] दातव्यमिति[3]। उपस्थायिकेन [4]विक्रीयोपस्थानं कर्तव्यं शास्तुश्च पूजा। स्वस्थीभूतस्यारोचयितव्यं यद् बुद्धसन्तकं तवोपयुक्तमिति[5]। यद्यस्य विभवोऽस्ति। तेन यत्नमास्थाय दातव्यम्। स चेन्नास्ति [6]यदस्योपयुक्तम्[7]। अर्हति पुत्रः पैतृकस्य। नात्र कौकृत्यं करणीयमिति।

श्रावस्त्यां निदानम्। अन्यतमो भिक्षुराबाधिको दुःखितो बाढग्लानो वेदनाभिभूतः। तस्य पात्रं शोभनम्। स तस्मिन्[8] अतीवाध्यवसितः। उपस्थायकमाह। आनय मे पात्रमिति। तेन न दत्तम्। स तस्यान्तिके चित्तं प्रदूष्य पात्रेऽध्यवसितः कालगतः। स तस्मिन्नेव पात्रे आशीविषो [भूत्वा] उत्पन्नः। भिक्षवस्तमादहनं नीत्वा संस्कार्य विहारमागताः। भिक्षुः संनिपतितः। चीवरभाजकेन मृतपरिष्कारिकं वृद्धान्तेऽभिरोहितम्। तत्र भगवाना-

1 Tib. omits this sentence.

2 Ms. पानीयं ; 167b, l. 1: རྫོག་(=allowance)ལ་སྦྱིན་པ་བྱ་ཞིང་།

3 Ms. पातव्यम्। 4 167b, l. 1: བསྒྱུར་ནས་།=transforming.

5 167b, l. 2: ཁྱོད་ཀྱི་ཡོ་བྱད་དུ་སྤྱད་དོ། 6 Ms. यद्यस्युप०

7 167b, l. 3: གལ་ཏེ་མེད་ན་དེའི་སྤྱད་པ་ལེགས་པར་སྤྱད་པ་ཡིན་ཏེ། ཕའི་ལ་བུ་བཞིན་དུ་རིགས་པ་ཡིན་པས། 8 Ms. तस्मिन् समयेनाती०

युष्मन्तमानन्दमामन्त्रयते स्म । गच्छानन्द । भिक्षूणामारोचय । न केनचित् तस्य भिक्षोः पात्रस्थविका मोचयितव्या । तथागत एव मोचयिष्यति । आयुष्मतानन्देन भिक्षूणामारोचितम् । ततो भगवता स्वयमेव मोचितः । आशीविषो महान्तं फणं कृत्वा-वस्थितः । ततो भगवता ऋवटाशब्देन प्रबोध्याभिहितः । गच्छ मोहपुरुष । त्यजैनं पात्रम् । भिक्षवो भाजयन्तु इति । स कुपितो यथेष्टगतिप्रचारतया वनगहनं प्रविष्टः । स तस्मिन् क्रोधाग्निना प्रज्वलितः । तद्वनगहनं प्रदीप्तम् । तत्रैव दग्धो भिक्षूणामन्तिके चित्त-मभिप्रदूष्य नरकेषूपपन्नः । तत्र भगवान् भिक्षूनामन्त्रयते स्म । निर्विद्यतां[1] भिक्षवः सर्वभवेभ्यो[2] निर्विद्यतां[1] सर्वभवोपपत्तिकरणेभ्यः । यत्र नामैकस्य सत्त्वस्य त्रिषु स्थानेषु कायो दह्यते । वनगहने क्रोधाग्निना । नरके नारकेण । श्मशाने प्राकृतेन । तस्मान्न भिक्षुणा परिष्कारेऽत्यर्थमध्यवसानमुत्पादयितव्यम् । यस्मिन्नुत्पद्यते तत् परित्यक्तव्यम् । न परित्यजति । सातिसारो भवति । अपि तु यदि ग्लानः स्वं परिष्कारं याचते । उपस्थायकेन लघुलघ्वेव दात-व्यम् । न ददाति । सातिसारो भवति ।

श्रावस्त्यां निदानम् । तेन खलु समयेनान्यतमो भिक्षुर्ग्लानो लयने कालगतः । अमनुष्यकेषूपपन्नः । चीवरभाजको भिक्षुस्तं लयनं प्रवेष्टुमारब्धः । पात्रचीवरं भाजयामीति । स तीव्रेण पर्यवस्थानेन लगुडमादायोत्थितः कथयति । यावन्मामभिनिर्हरथ

1 Ms. निर्विद्यत ; Cf. *Mvyut*. 81. 6-8 : यथाभूतदर्शी निर्विद्यते । निर्विण्णो विरज्यते । विरक्तो विमुच्यते ।

2 Ms. भवेद्यो

तावत्पात्रचीवरं भाजयथेति। स संत्रस्तो निष्पलायितः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। पूर्वं तावन्मृतो भिक्षुरभिनिर्हर्तव्यः पश्चात्तस्य पात्रचीवरं भाजयितव्यमिति।

श्रावस्त्यां निदानम्। तेन खलु समयेनान्यतमो भिक्षुः कालगतः। भिक्षवस्तमभिनिर्हृत्य एवमेव श्मशाने छोरयित्वा विहारमागतः। चीवरभाजकस्तस्य लयनं प्रविष्टः। पात्रचीवरं भाजयामीति। सोऽमनुष्यकेषूपपन्नः। लगुडमादायोत्थितः। स कथयति। यावन्मम शरीरपूजां कुरुथ तावत्पात्रचीवरं भाजयथेति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। भिक्षुभिस्तस्य पूर्वं शरीरपूजा कर्तव्येति। ततः पश्चात्पात्रचीवरं भाजयितव्यम्। [1]एष आदीनवो [न] भविष्यतीति।

श्रावस्त्यां निदानम्। तेन खलु समयेनान्यतमो भिक्षुर्ग्लानो लयने कालगतः। स भिक्षुरादहनं नीत्वा शरीरपूजां कृत्वा दग्धः। ततो विहारमागतः। चीवरभाजकस्तस्य लयनं प्रविष्टः। स लगुडमादायोत्थितः। तत्तावन्मामुद्दिश्य धर्मश्रवणमनुप्रयच्छथ तावच्चीवरकाणि भाजयथेति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तमुद्दिश्य धर्मश्रवणं दत्त्वा दक्षिणामुद्दिश्य पश्चाच्चीवरकाणि भाजयितव्यानीति।

उद्दानम्।

**ग्लानकश्चाथ श्रेष्ठी च प्रतिवस्तु[2] नवकर्मिकः।**
**सीमा चतुष्किकां कृत्वा अष्टौ दूतेन कारयेत्॥**

1 Tib. अत ; 169a, l. 3: ཉེས་དམིགས་འདིར་མི་འགྱུར་རོ།

2 169a, l. 7: དངོས་པའི་སྐྱིན་པ། =borrowed article.

श्रावस्त्यां निदानम्। तेन खलु समयेनान्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः। भिक्षुसंघः प्रविष्टः। भगवानौपधिकेऽस्थात्[1] अभिनिर्हृतपिण्डपातः। पंचभिः कारणैर्बुद्धा भगवन्तः औपधिके तिष्ठन्त्यभिनिर्हृतपिण्डपाताः। कतमैः पंचभिः। [2]प्रतिसंलातुकामा भवन्ति। देवतानां धर्मं देशयितुकामा भवन्ति। शयनासनं प्रत्यवेक्षितुकामा भवन्ति। ग्लानमवलोकयितुकामा भवन्ति। श्रावकाणां विनयशिक्षापदं प्रज्ञपयितुकामा भवन्ति। अस्मिंस्त्वर्थे द्वाभ्यां कारणाभ्यां बुद्धो भगवानौपधिकेऽस्थादभिनिर्हृतपिण्डपातः।

अथ भगवान् चिरप्रक्रान्तं भिक्षुसंघं विदित्वा अपावरणीं[3] गृहीत्वा आरामेणारामं विहारेण विहारं परिगणेन परिगणं चंक्रमेण चंक्रममनुचंक्रम्यमाणोऽनुविचरति। अनेनान्यतमो महल्लको विहारस्तेनोपसंक्रान्तः। तत्र भिक्षुर्बाढग्लानः अल्पज्ञातः स्वे मूत्रपुरीषे निमग्नो भगवन्तं दृष्ट्वाऽपरस्वरमकार्षीत्[4]। अनाथोऽस्मि भगवन्। अनाथोऽस्मि सुगत इति। भगवानाह। कस्मात्त्वं भिक्षो मां त्रैलोक्यनाथमुद्दिश्य प्रव्रजित एवं विरौषि। अनाथोऽस्मि भगवन्। अनाथोऽस्मि सुगत इति। न मे भदन्त कश्चित्सब्रह्मचारी उपस्थानं करोत्यवलोकयति वा। अस्ति त्वया भिक्षो कस्यचित्

1 169b, l. 2: བསྒྲུབས་པ་ན་བཞུགས་ནས། =संग्रहः

2 Cf. *Mvyut*. 85. 5: प्रतिसंलयनम्; 169b, l. 3: ནང་དུ་ཡང་དག་འཇོག་པར།

3 169b, l. 6: ལྡེ་མིག་བསྡམས་ཏེ། =key of a storehouse.

4 170a, l. 2-3: སྐད་ན་བཏོན་པ།

सब्रह्मचारिण उपस्थानं कृतमवलोकितं वा। नो भदन्त। अत एव ते इयं समवस्था। भगवान् [1]लौकिकचित्तमुत्पादयति। अहो बत शक्रो देवेन्द्रोऽनवतप्तान्महासरसः पानीयमादाय गन्धमादनाच्च पर्वतान्मृत्तिकामानयेदिति। धर्मता खलु यस्मिन् समये भगवान् लौकिकं चित्तमुत्पादयति तस्मिन् समये शक्रब्रह्मादयोऽपि देवा भगवतश्चित्तमाजानन्ति। ततः शक्रो देवेन्द्रः अनवतप्तान्महासरसः अष्टांगोपेतस्य पानीयस्य सौवर्णं भृङ्गारमादाय गन्धमादनाच्च पर्वतान्मृत्तिकां लघुलघ्वेव भगवतः पुरस्तादस्थात्। एवं चाह। तिष्ठतु भगवानहमस्योपस्थानं करोमि। भगवानाह। नैष कौशिकमुद्दिश्य प्रव्रजितः किं तु माम्। [2]अपि तु किं त्वयैष पूर्वं न दृष्टः। तिष्ठ त्वम्। शुचिकामा देवाः। अहमेवास्योपस्थानं करोमि। ततो भगवता चीवरं बद्ध्वा [3]चक्रस्वस्तिकनन्द्यावर्तेनानेकपुण्यशतनिर्जातेन भीतानामाश्वासनकरणकरेणासौ भिक्षुर्गृहीत्वा मूत्रपुरीषात् उद्धृत्य एकान्ते स्थापितः। वंशविदलिकया[4] निर्लिखितः। पाण्डुमृत्तिकया उद्वर्तितः स्नापितः। ततः [स्थापितः[5]। चीव]रकाण्यस्य प्रक्षालितानि। तस्मिन् प्रदेशे सुकुमारी गोमयकार्षी दत्ता। ततो हस्तपादौ संप्रशोध्य शक्रं देवेन्द्रं ग्लानोपस्थानपूर्वि-

1 Cf. *Divyā.*, p. 161.
2 170b, l. 4: གཞན་ཡང །
3 170b, l. 6: ཕྱག་འཁོར་ལོ་དང་བཀྲ་ཤིས་ཟང་ །གཡུང་དྲུང་འཁྱིལ་བ་ཅན །
4 170b, l. 7: སྨྱུག་གི་ཚལ་པས་བཞར་ནས་=cleaned (lit. shaved) by a bamboo chip.
5 171a, l. 1: དེ་ནས་ སྐྱིལ་མོ་ཀྲུང་ འཆར་བཙུག་ནས །

कथा धर्मदेशनया सन्देश्य समादाप्य विहारं प्रविष्टः। [आयुष्माना-]न्दः पिण्डपातनिर्हारकः पिण्डपातमादाय भगवत्सकाशमुपसंक्रान्तः। धर्मता खलु बुद्धा भगवन्तः पिण्डपातनिर्हारकं भिक्षुमनया प्रतिसंमोदनया प्रतिसंमोदन्ते। [1]कच्चिद्भिक्षो प्रणीतं भक्तं संतर्पितो भिक्षुसंघ इति। प्रतिसंमोदते भगवानायुष्मन्तमानन्दम्। [1]कच्चिदानन्द प्रणीतं भक्तं सन्तर्पितो भिक्षुसंघ इति। तथ्यं[2] भदन्त। प्रणीतं भक्तं सन्तर्पितो भिक्षुसंघः। ततो भगवान् उपार्धपिण्डपातमादायायुष्मन्तमानन्दमामन्त्रयते। गच्छ आनन्द अमुष्मिन् विहारे बाढग्लानो भिक्षुः। तस्मै [दे]य[3]मुपार्धपिण्डपातम्। यद्भुंक्ते चैनं वक्तव्यः। शास्त्रा ते आयुष्मन् स्वयमेवोपस्थानं कृतम्। उपार्धपिण्डपातेन च संविभागः कृत इति। एवं भदन्त इत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्योपार्धपिण्ड[पात]मादाय तस्मै दत्त्वा यथासन्दिष्टमारोचितवान्[4]।

अथ तस्य भिक्षोरेतदभवत्। मम त्रैलोक्यगुरुणा स्वयमुपस्थानं कृतमुपार्धपिण्डपातश्च दत्तः। न मम प्रतिरूपं स्याद् यदहं श्रद्धादेयं परिभुज्य कौसीद्येनातिनामयेयम्। यत्त्वहं पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तो विहरेयमिति। तेन पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन विहरता इदमेव च पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतिं[5] शतनपतनविकि-

1 Ms. कश्चिद् Cf. Pāli : कच्चि in *Vinaya*, I, pp. 253, 313.

2 Evidently for तथा।

3 Ms. यैनमु०

4 171b, l. 4: Tib. ends here a section thus: འདུལ་བ་གཞི། བམ་པོ་རེ་དྲུག་པ། See above, p. 110.

5 Ms. गती ; 171b, l. 7: ཉམས་པ་དང | Cf. *Divyā.*, p. 180.

रणविध्वंसनधर्मतया पराहत्य[1] सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतमिति। अर्हन् संवृत्तः। त्रैधातुके वीतरागः समलोष्टकांचनः आकाशपाणितलसमचित्तो [2]वासीचन्दनकल्पो[ऽ]विद्याविदारिताण्डकोशो[3] विद्याभि[ज्ञः] प्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपरांमुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः।

तत्र भगवान् भिक्षूनामन्त्रयते। एषां भिक्षवो ग्लानानां न माता न पिता न चान्यो बन्धुः नान्यत्र यूयमेव सब्रह्मचारिणः। तस्मात् सब्रह्मचारिभिः परस्परमुपस्थानं करणीयम्। उपाध्यायेन सार्धंविहारिणः। सार्धंविहारिणा उपाध्यायस्य। आचार्येणान्तेवासिनः। अन्तेवासिना आचार्यस्य। समानोपाध्यायेन समानोपाध्यायस्य। समानाचार्येण समानाचार्यस्य। [4]आलप्तकेनालप्तकस्य। संलप्तकेन संलप्तकस्य[5]। संस्तुतकेन संस्तुतकस्य। सप्रेमकेन सप्रेमकस्य। यः पर्षद्भिर्निर्मुक्तोऽल्पज्ञातश्च तस्य संघेनोपस्थायिको देयः। ग्लानावस्थां परिच्छिद्य एको वा द्वौ वा संबहुला वा। अन्ततः सर्वसंघेनोपस्थानं करणीयम्।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्त भगवता तस्य भिक्षोः स्वयमेवमुपस्थानं कृतम्। तेन चार्हत्त्वं साक्षात्कृतमिति। भगवानाह। न भिक्षव एतर्हि

1 172a, l. 1: ཟིལ་གྱིས་མནན་ནས=अभिभूय 2 172a, l. 2: སྟེའུ =axe

3 172b, l. 3: མ་རིག་པའི་སྒོ་ངའི་སྦུབས་བྲལ་བར་གྱུར་ཅིང ।=अविद्याण्डकोशविदारितोः

4 172b. l. 1: གདམ་འདྲིས་པ । 5 Tib. omits this.

यथा अतीतेऽप्यध्वनि तस्य मया उपस्थानं कृतम्। तेन च पञ्चाभिज्ञाः साक्षात्कृताः।

भूतपूर्वं भिक्षवोऽन्यतमस्मिन्नाश्रमपदे पुष्पफलसलिलसम्पन्ने नानावृक्षोपशोभिते ऋषिः प्रतिवसति पञ्चाभिज्ञः। तेन शिष्यस्योपस्थानं कृतम्। स्वस्थीभूतः। ततस्तेन पञ्चाभिज्ञाः साक्षात्कृताः। किं मन्यध्वे भिक्षवः। योऽसौ तेन कालेन तेन समयेन ऋषिरासीदहं सः। योऽसौ तस्य ऋषेः शिष्य एष एवासौ भिक्षुः। तदाप्यस्य मया उपस्थानं कृतमेतर्ह्यप्यस्य मया उपस्थानं कृतम्।

पुनरपि भिक्षवो बुद्धं भगवन्तं पप्रच्छुः। पश्य भदन्तातीव भगवतो ग्लानकः प्रिय इति। भगवानाह। न भिक्षव एतर्हि यथा अतीतेऽप्यध्वनि ममातीव ग्लानकाः प्रियाः। तच्छ्रूयताम्।

भूतपूर्वं भिक्षवः शिवघोषायां राजधान्यां शिविर्नाम राजा राज्यं कारयति। ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च। तस्य नास्ति किञ्चिदपरित्याज्यं याचनकेभ्यो विशेषतस्तु ग्लानेभ्यः। यावदन्यतमो गृहपतिर्ग्लानः सर्ववैद्यप्रत्याख्यातो राज्ञः सकाशं गतः। देव चिकित्सां मे कारय इति। ततो राज्ञा वैद्यानामाज्ञा दत्ता। भवन्तोऽस्य चिकित्सां कुरुतेति। ते कथयन्ति। देव दुर्लभान्यस्य भैषज्यानीति। राजा कथयति। कीदृशानि पुनस्तानि भैषज्यानि। देव यः कदाचिज्जन्मनः प्रभृति [न] कस्यचिद्रुषितपूर्वस्तस्य रुधिरेण यवागूः षण्मासान् दातव्या। एवमस्य स्वास्थ्यं भवति। नान्यथेति। राजा कथयति। सत्यं दुर्लभमस्य [भैषज्यम्। स आ]त्मनः

प्रचारं परिच्छेत्तुमारब्धः। दुःखमात्मनः प्रचारः परिच्छिद्यते। स धात्रीं प्रष्टुमारब्धः। अम्ब अस्त्यहमियता कालेन कस्य[1]-चिद्दुषितपूर्वः। कुमार यदा त्वं ममांसगतस्तदाहमपि न कस्य-[चिद्दुषितपूर्वा प्रागेव त्व]मिति। ततो जनन्याः सकाशमुपसंक्रान्तः। कथयति। अम्ब अस्त्यहं कस्यचिद्दुषितपूर्वः। कुमार यदा त्वं मम कुक्षिगतस्तदाहमपि न कस्यचिद्दुषितपूर्वा प्रागेव त्वमिति। स संलक्षयति। लब्धं भैषज्यमिति विदित्वा तेन वैद्याना[मा]ज्ञा दत्ता। भवन्तो मयात्मा परीक्षितः। अहं न कदाचित् कस्यचिद्दुषित-पूर्वः। मम [2]पंचेङ्गिकशिरावेधं कुरुत। देव वयं प्राकृतपुरुषस्यार्थाय देवस्य काये शस्त्रं [न][3] निपातयामः। कुशला भवन्ति बोधि-सत्त्वास्तेषु तेषु शिल्पस्थानकर्मस्थानेषु। राज्ञा स्वयमेव शिरावेधः कृतः। तेन च रुधिरेण षण्मासान् प्रतिदिनं तस्मै यवागूर्दत्ता। स्वस्थो जातः। किं मन्यध्वे भिक्षवः। योऽसौ राजा अहं स तेन कालेन तेन समयेन। तदापि मे ग्लानकाः प्रियाः प्रागे-वेदानीम्।

पुनरपि शिवे राज्ञः पुत्रस्य पार्श्वशोषो जातः। राज्ञा वैद्यानामाज्ञा दत्ता। भवन्तोऽस्य कुमारस्य चिकित्सां कुरुतेति। ते कथयन्ति। देव सर्वसारं घृतं पच्यताम्। इति विदित्वा द्वादशभि-र्वर्षैः सर्वद्रव्याणि समुपानीतानि। अद्यापि [4]जीवजीवकमांसं न लभ्यते। वैद्यैः शाकुन्तिकानामाज्ञा दत्ता। आगच्छत। आदर्शकं

1 Ms. न कस्य॰

2 See above, p. 15

3 174a, l. 1: མཚོན་མི་འདེབས་སོ། 

4 174a, l. 6; ཤང་ཤང=जीवञ्जीवः

कुक्कुटकं च गृहीत्वा समुद्रतटं गच्छत। तत्र पाशान् पातयित्वा कुक्कुटकस्य पुरस्तादादर्शं स्थापयत। कुक्कुटः स्वं प्रतिबिम्बं दृष्ट्वा कुक्कुटोऽयमिति रविष्यति। कौतूहली जीवजीवकः कुक्कुट-शब्दं श्रुत्वा कुक्कुटसमीपमागमिष्यति। अयं तस्य बन्धनोपाय इति। तैस्तथा कृतम्। यावत्कर्मपाशितो जीवजीवकः प्राणी बद्धः। ते तमादाय संप्रस्थिताः। धर्मता ह्येषा अचिरव्यतिवृत्ते लोक-सन्निवेशे तिर्यञ्चोऽपि वाक्प्रव्याहरणसमर्था भवन्ति। जीवजीवकः प्राणी कथयति। भवन्तः कुत्र मां नयथ। तैर्यथावृत्तं समाख्यातम्। स कथयति। मुंचत मुंचत माम्। मांसबलो[1] नाम औषधी कथ-यसि रत्नानि वेति। ते कथयन्ति। उपदर्शय तावत्पश्यामः कीदृशास्ता ओषधय इति। तेन समाख्यातम्। मदीयस्नानो-दकं मांसबलम्। तदादाय गच्छ। इमानि च रत्नानीति। ते राज्ञः शंकिताः। रत्नान्यपास्य तमेव जीवजीवकमादाय संप्रस्थिताः। अनुपूर्वेण शिवघोषां राजधानीमनुप्राप्ताः। तैर्जीवजीवकप्राणी राज्ञ उपनामितः। यच्च तेनौषधमादिष्टं तच्च कथितम्। ततो राज्ञा जीवजीवकः पृष्टः। कथयति। देव मम स्नानोदकं मांस-बलमिति। राज्ञा सप्त उदकमणयः शोभनाम्भसः पूर्णाः स्थापिताः। स तेषु यावत् स्नातो यावत्सुविश्रान्तो जातः। ततः कायस्य बलं ज्ञात्वा सहसा उत्प्लुत्य [2]शरणपृष्ठमभिरूढो विगत-भयभैरवो गाथां भाषते।

1 174b. 1. 4: འདི་མཐུ།

2 175a. 1. 2: ཁང་པ=गृहम्।

पूर्वं तावदहं मूर्खः पश्चाच्छाकुन्तिका इमे ।
ततो राजा च वैद्याश्च संपूर्णं मूर्खमण्डलम् ॥

इत्युक्त्वा प्रक्रान्तः । ततो राज्ञा [वैद्या] आहूय पृष्टाः । भवन्तः सत्यम् । भवन्तः जीवजीवकस्य स्नानोदकं तन्मांसेन समबलमिति । ते कथयन्ति । देव सत्यम् । पचत घृतम् । तैः सर्वसारं घृतं पक्वम् । राजपुत्र उपयोक्तुं प्रवृत्तः । यावदन्यतमस्मिन् हिमवत्कन्दरे पञ्च प्रत्येकबुद्धशतानि प्रतिवसन्ति तत्रैकस्य पार्श्वशोषो जातः । स तैः प्रत्येकबुद्धैरभिहितः । आयुष्मन् जनपदान् गत्वा वैद्यं पृष्ट्वा भैषज्यं सेव[स्व] । स्वस्थो भविष्यसीति । कथयति । आयुष्मन्त आगमिष्यन्ति । स धर्मो बहुजनानिष्टो बहुजनाकान्तो बहुजनाप्रियो बहुजनामनापः सर्वसत्त्वसाधारणः यदुत मरणं नाम यो मां स व्याधिना नेष्यति । कस्यार्थाय ग्रामान्तमवसरामीति । ते कथयन्ति । आयुष्मन् यद्यप्येवं यथापि यावच्छीलवान् पुरुषपुद्गलश्चिरं जीवति तावद् बहुपुण्यं प्रसूयते । यावद् बहुपुण्यं प्रसूयते तावच्चिरं स्वर्गेषु मोदते । स तैरुपरुध्यमानो जनपदादवतीर्णः । अनुपूर्वेण शिवघोषां राजधानीमनुप्राप्तः । ततो मार्गश्रमं प्रतिविनोद्य [वैद्य]सकाशं गतः । भद्रमुख ममेदृशो रोगः । भैषज्यं व्यपदिश इति । स कथयति । आर्य यादृश एवायं तव रोगस्तादृश एव राज्ञः पुत्रस्य । द्वादशभिर्वर्षैः सर्वसारं घृतं पक्वम् । गत्वा प्रार्थय । यद्यप्येतत्ते मण्डमपि[1]

1 175b, l. 7: སློང་ས་ཤིག=भिक्षा

भाग्यविशेषात्प्रतिलभसे तेन ते याप्यं भविष्यतीति । स राजकुलद्वारं गत्वावस्थितः। आचरितं तस्य राज्ञः। घण्टा द्वारे नित्यं प्रलम्बिता। याचनकजननिवेदी। यदा याचनको द्वारे तिष्ठति तदासौ रौति। यावदसौ घण्टा प्रत्येकबुद्धमागतं निवेदयन्ती रटितुमारब्धा। ततो राजपुत्रः कथयति। अम्ब तात याचनकोऽभ्यागतः। विचार्यतां किं प्रार्थयतीति। तौ कथयतः। पुत्र अस्माभिर्द्वादशभिर्वर्षैर्द्रव्यसंहारं कृत्वा इदं घृतं पक्वम्। पिब तावत्पश्चाद्याचनकं प्रवेशयामः। विचारयिष्यामः किं प्रार्थयतीति। तस्य [1]कृतकुतूहलस्वस्त्ययनस्य घृतं पातुकामस्य याचनकभाजनाशामर्मसंघट्टितशरीरस्य तद्धृत्तं न रोचते। कथयति च। अम्ब तात न तावत्परिभोक्ष्ये यावद्याचनकः प्रविशत[2] इति। राज्ञा द्वौवारिकस्याज्ञा दत्ता। याचनकं प्रवेशय इति। स प्रवेशितः। राजपुत्रेण दृष्टः। कायप्रासादिकश्चित्तप्रासादिकश्च शान्तेनेर्यापथेनावतीर्णः। स कथयति। आर्यकेण किं प्रयोजनम्। तेन विस्तरेण समाख्यातम्। स कथयति। आर्य त्वमेव मण्डार्हो नाहम्। गृहाण। ददामीति। तेन पात्रं प्रसारितम्। राजपुत्रेण तीव्रेणाशयेन तस्मै तन्मण्डो दत्तः। तेनापि महात्मना सर्वसत्त्वहितानुगतं राजपुत्रेण चित्तमुत्पादितम्। ऋध्यति शीलवतश्चेतःप्रणिधानम्। तच्च विशुद्धत्वाच्छीलस्येति। उभावपि स्वस्थौ संवृत्तौ। किं मन्यध्वे भिक्षवो योऽसौ राजकुमारः

1 176a, l. 4: དེ་ངོ་མཚར་དང་། བཀྲ་ཤིས་དང་། བདེ་ལེགས་སུ་གྱུར་པ་དག་བྱས་ནས་མར་འཐུང་བར་འདོད་ན། 2 Ms. प्रवेशत

अहमेव स तेन कालेन तेन समयेन। तदापि मे ग्लानकाः प्रियाः प्रागेवेदानीम्।

किं भदन्त तेन राजपुत्रेण तेन च प्रत्येकबुद्धेन कर्म कृतं येन तयोर्युगपद् व्याधिरुत्पन्नो युगपच्च व्युपशान्तिरिति। भगवानाह। तस्यामेव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि[1] परिणतप्रत्ययान्योघवत्प्रत्युपस्थितानि[2] अवश्यंभावीनि। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते। नाब्धातौ। न तेजोधातौ। न वायुधातावपि। भूधातुष्वेव[3] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा बभूव। तस्य द्वौ पुत्रौ। तयोर्यः कनीयान् स राज्याभिनन्दी। पुरोहितस्यापि द्वौ पुत्रौ। तयोरपि यः कनीयान् स पौरोहित्यं प्रार्थयते। धातुतः सत्त्वा संस्यन्दन्त इति[4] तयोः परस्परं सख्यमुत्पन्नम्। राजपुत्रः कथयति। क उपायः[5] स्याद् येनाहं राजा भवेयम्। स कथयति। अस्त्युपायः। यदि त्वं मां पौरोहित्ये स्थाप-

1 Ms. संबाराणि 2 176b, l. 6: འོད་པ་བཞིན་དུ་ཉེ་བར་གནས་པ།

3 177b, l. 2: ཟིན་པའི་ཕུང་པོ།

4 Ms. धातुसमत्त्वा ; cf. Pāli *Saṃyutta Nikāya*, II, p. 157 : धातुसो सत्ता संसन्देन्ति समेन्ति।  5 Ms. उपाधायः

यसि कथयामीति । स कथयति । एवं भवतु । कथय । स्थापयामीति । स कथयति। अहं तव भ्रातरं व्यंगं[1] करोमि। त्वं राजा भवसीति । तेनानुमोदितम् । ततस्तेन तस्य ज्येष्ठस्य राजपुत्रस्य भैषज्यं दत्तम् । व्यंगीभूतः । अपरेण समयेन राजा कालगतः । अमात्यैः[2] स व्यंग इति कृत्वा कनीयान् राज्येऽभिषिक्तः । तेनाप्यसौ कनीयान् पुरोहितपुत्रः पौरोहित्ये प्रतिष्ठापितः । यावदपरेण समयेन राजा पुरोहितेन सार्धं संलापेन[3] तिष्ठति । राज्ञासौ भ्राता व्यंगो दृष्टः । तस्य तं दृष्ट्वा विप्रतिसार उत्पन्नः । न शोभनं मया कृतं यद्राज्यहेतोर्भ्राता व्यंगीकृत इति । पुरोहितः कथयति । देव ममापि विप्रतिसार उत्पन्नः । यदि देवस्याभिमतं पुनरप्येवं यथापौराणं करोमीति । स कथयति । कुरुष्वानुजाने । तेन तस्य भैषज्यं दत्तम् । स्वस्थीभूतः । ततस्तौ प्रत्येकबुद्धे कारान्[4] कृत्वा प्रणिधानं कर्तुमारब्धौ । यदावाभ्यामेवंविधे सद्भूतदक्षिणीये काराः[4] कृता अस्य कर्मणो विपाकेन आढ्ये महाधने महाभोगे कुले जायेयहि । अस्य च पापस्य व्यंगीकरणस्य कर्मणो विपाकमनुभवेयमिति । किं मन्यध्वे भिक्षवः । योऽसौ राजपुत्रः अहमेव स तेन कालेन तेन समयेन । योऽसौ पुरोहितपुत्रः एष एवासौ प्रत्येकबुद्धः । यत्ताभ्यां संजल्पं कृत्वा राजकुमारस्य भैषज्यं दत्तं तेन युगपद् व्यंगौ संवृत्तौ । यत्तु विप्रतिसाराभ्यां विचार्य पुनर्भैषज्यं दत्तं तेन युगपत् स्वस्थीभूतौ । इति हि

1 177a, l. 7: ཞ་བོ =cripple, lame 2 Ms. अमात्या:

3 Ms. कलापेन ; 177b. l. 2: བྲེ་མོ་གཏམ་སྨྲ་ཞིང | 4 Evidently for सत्कारान्

भिक्षवः एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाकः। एकान्तशुक्लानामेकान्तशुक्लः। व्यतिमिश्राणां व्यतिमिश्रः। तस्मात्तर्हि भिक्षवः एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि च एकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयः। इत्येवं वो भिक्षवः शिक्षितव्यम्।

श्रावस्त्यां निदानम्। तेन खलु समयेन श्रावस्त्यां श्रेष्ठिनामा गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात् कुलात् कलत्रमानीतम्। सोऽपुत्रः पुत्राभिनन्दी शिववरुणकुवेरशक्रब्रह्मादीनन्यांश्च देवताविशेषानायाचते। तद् यथा आरामदेवता वनदेवता चत्वरदेवता शृंगाटकदेवता बलिप्रतिग्राहिका देवताः सहजाः सहधर्मिका नित्यानुबद्धा अपि देवता आयाचते[1]। अस्ति चैष लोकप्रवादः। यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति। तच्च नैवम्। यद्येवमभविष्यत् एकैकस्य पुत्रसहस्रमभविष्यत् तद्यथा राज्ञश्चक्रवर्तिनः। अपि तु त्रयाणां स्थानानां संमुखीभावात् पुत्रा जायन्ते दुहितरश्च। कतमेषां त्रयाणाम्। मातापितरौ रक्तौ भवतः। सन्निपतितौ। माता कल्या भवति ऋतुमती। गंधर्वश्च प्रत्युपस्थितो भवति। एषां त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। यदास्य देवताराधनेनापि न पुत्रो न दुहिता तदा सर्वदेवताः प्रत्याख्याय भगवत्यभिप्रसन्नः। यावदन्यतमस्य भिक्षोः सकाशमुपसंक्रान्तः। आर्य इच्छामि

1 Cf. *Divyā.*, p. 1.

स्वाख्याते धर्मविनये प्रव्रजितुम्। भद्रमुख एवं कुरु। स तस्यानुपूर्व्या केशावतरणं कृत्वा शिक्षापदानि ग्राहयितुमारब्धः। प्रव्रज्यान्तरायकरेण च महता ज्वरेणाभिभूतः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। उपस्थानमस्य करणीयम्। न तावच्छिक्षापदानि देयानि यावत्स्वस्थः संवृत्तः। इत्युक्तं भगवता। तस्योपस्थानं कर्तव्यमिति हि भिक्षवो न जानन्ते केन कर्तव्यमिति। भगवानाह। भिक्षुभिः। वैद्यास्तस्य दिवा भैषज्यं कुर्वन्ति। रात्रौ ग्लान्यं वर्धते। ते कथयन्ति। आर्य वयमस्य दिवा चिकित्सिकां कुर्मः रात्रौ ग्लान्यं वर्धते। यद्येष गृहं नीयते वयमस्य रात्रौ चिकित्सां कुर्याम इति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। गृहं नीयतां तत्राप्यस्योपस्थायिकाननुप्रयच्छत। तस्य तद् ग्लान्यं दीर्घकालीनं संवृत्तम्। केशास्तस्य दीर्घदीर्घा जाताः। तस्य मुण्डो गृहपतिरिति संज्ञा संवृत्ता। स यदा मूलगण्डपत्रपुष्पफलभैषज्यैरुपस्थीयमानो न स्वस्थीभवति तदा तेनात्मा परिच्छिन्नो मृतोऽहमिति। ततस्तेन मरणकालसमये सर्वं सन्त[क]स्वापतेयं पत्राभिलेख्यं कृत्वा जेतवने प्रेषितम्। स च कालगतः। अमात्यै राज्ञः प्रसेनजितः कोसलस्यारोचितम्। देव मुण्डो गृहपतिरपुत्रः कालगतः। प्रभूतं चास्य हिरण्यसुवर्णमस्ति हस्तिनोऽश्वा गावो महिष्यः सन्नाहानि च। एतच्च सर्वं पत्राभिलिखितं कृत्वा जेतवनमार्यसंघाय प्रेषितम्। राजा कथयति। आर्योपनन्दसन्तकमेव[1] मया अपत्रा-

1 See above, p. 119.

भिलिखितं न प्रतिलब्धं प्रागेव पत्राभिलिखितं प्रतिलप्स्ये। अपि तु यद्भगवाननुज्ञास्यति तद् ग्रहीष्ये। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। किं तत्र भिक्षवः संविद्यन्ते।

अन्तरोद्दानम्।

वस्तुशयनासनप्रावरणमयोलोहं[1] च चन्दनम्।
कुम्भानि पीतभक्षादि रंजनं यष्टिजम्बुकम्[2] ॥
द्विपदा चतुष्पदा यावत् अन्नदानं च भैषज्यम्।
दासो वा प्रस्तरं[3] लभ्यं यथायोगेन भाजयेत् ॥
हिरण्यं च सुवर्णं च यच्चाप्यन्यत्कृताकृतम्।
समग्रः संघो भाजयेदिति प्रोक्तं महर्षिणा ॥

भिक्षुभिः समाख्यातम्। भगवानाह। यथायोगेन भाजयितव्यम्। तत्र क्षेत्रवस्तु गृहवस्त्वापणवस्तु[4]। शयनासनमयस्कार[5]-भाण्डं लोहकारभाण्डं कुम्भकारभाण्डम्। कुण्डिकाकरण्डकविवर्जितं[6] तक्षभाण्डं[7] वरुटभाण्डम्[8]। दासीदासकर्मकारपौरुषेयाणामन्नपानं[9] व्रीहयश्चाविभाज्याः। चातुर्दिशाय भिक्षुसंघाय साधारणाः स्थापयितव्याः। शाटकाः पटका चर्मभाण्डमुपानहस्तैलकुतुपाः[10] कुण्डिका-

1 Ms. लोभं
2 Ms. कुम्भनापितभक्षादिरजनं यष्टितु बुकः।
3 Ms. प्रसवप्रस्तरे 180a, 1, 2: བྲན་ དང་གཡེང་བ་དཔང་རྒྱ་དང །
4 Ms. ०वस्त्व ; 180a, l. 4: ཚོང་ཁང་གི་གཞི་དང །
5 Ms. ०सनाय संस्का०
6 Tib, omits this
7 180a. l. 5 adds ཤིང་མཁན་གྱི་ལག་སྤྱད་དང ། = पलगण्डः, वर्द्धकः।
8 *Ibid.* སྨྱུག་མ་མཁན་གྱི་ལག་སྤྱད་དང ། =bamboo-worker.
9 Ms. कन्दर for कर्मकार ; 180a, l. 6: ལས་བྱེད་པ །
10 Ms. कुतपाः ; 180a, l. 7: འབྲུ་མར་གྱི་སྣོད་དང ། Cf. Mvyut. 272. 70

करकाश्च समग्रेण संघेन भाजयितव्याः। यष्ट[यो या] आयतास्ता[1] जम्बूच्छायिकाः प्रतिमाया ध्वजवंशाः कारयितव्याः। याः स्वल्पास्ताः खंखरकाः[2] कृत्वा भिक्षूणां दातव्याः। पुलदार[कं] संघे[न] यथा[3]-सुखमविक्रीय यथाभिप्रसादलब्धेन मोक्तव्याः। चतुष्पदानां हस्तिनोऽश्वा उष्ट्राः खरा वेसराश्च[4] राज्ञ उपयोगाः। महिष्यः अजा एडकाश्चातुर्दिशाय भिक्षुसंघाय साधारणा अविभाज्याः। यश्च[5] सन्नाहो यच्चान्यत्र [6]राजोपयोज्यं तत् सर्वं राज्ञ उपनामयितव्यम्। स्थापयित्वायुधानि तैः शस्त्रकैः सूच्यः खंखरकाश्च कारयित्वा संघे चारयितव्याः। रंगाणां महारंगः कंकुष्टहिंगुलुकराजपत्त्यादयस्ते[7] गन्धकुट्यां प्रक्षेप्तव्याः प्रतिमोपयोगिकाः। खंखटिकं [8]गैरिकं नीलिश्च संघेन भाजयितव्या। मद्यं मृष्टयवान्[9] प्रक्षिप्य भूमौ निखातव्यम्। शुक्तत्वे[10] परिणतं परिभोक्तव्यम्। [11]शुक्तत्वानुपयोज्यं तु छोरयितव्यम्। मां भिक्षवः शास्तारमुद्दिशद्भिर्मद्यमदेयमपेयमन्ततः कुशाग्रेणापि[12]। भैषज्यानि ग्लानकल्पिकशालायां

1 Ms. यष्ट्यायामन्यस्ता 2 180b, l. 2: ཁར་སིལ | Cf. Mvyut. 272. 9.

3 Tib. omits यथासुखं 4 180b, l. 3: འདྲེའུ་རྣམས | Cf. Mvyut. 213. 47: वेगसराः 5 Ms. जेत 6 Ms. प्राज्ञो०

7 Ms. राजवद्यादयस्ते ; 180b, l. 6: ཤིང་ཤིང | Cf. Mvyut. 235.7

8 180b, l. 7: ཐོད་ལོ་ཀོར་དང | 9 180b, l. 7: ཆང་ནི་ཡོས་ བླུགས |

10 180b, l. 7: ཚོར་གྱུར་ན |=on completion (i.e. maturing) 11 Ns. शुक्तादनु०

12 181a, l. 1 ; དགེ་སློང་དག་ང་སྟོན་པ་ཡིན་པར་ཁས་ལེན་པ་རྣམས་ཀྱི་ཆང་མི་སྦྱིན་ཞིང་ཐ་ན་རྩ་མཆོག་གིས་ཀྱང་མི་བཏུང་ངོ |

प्रक्षेप्तव्यानि । ततो ग्लानकैर्भिक्षुभिः परिभोक्तव्यानि । रत्नानां मुक्ता वर्जयित्वा मणिवैडूर्यदक्षिणावर्तपर्यन्तानि तु द्वौ भागौ कर्तव्यानीति । एको धर्मस्य । द्वितीयः संघस्य । यो धर्मस्य तेन बुद्धवचनं लेखयितव्यम् । सिंहासने चोपयोक्तव्यम् । यः संघस्य स भिक्षुभिर्भाजयितव्यः । पुस्तकानां बुद्धवचनपुस्तका अविभज्य चातुर्दिशाय भिक्षुसंघाय धारणकोष्ठिकायां प्रक्षेप्तव्याः । बहिःशास्त्रपुस्तका भिक्षुभिर्विक्रीय[1] भाजयितव्याः । पत्रलेख्यं यच्छीघ्रं शक्यते साधयितुं[2] तस्य द्रव्यविभागे तद्भिक्षुभिर्भाजयितव्यम् । न शक्यते तच्चातुर्दिशाय भिक्षुसंघाय धारण[3] । कोष्ठिकायां प्रक्षेप्तव्यम् । सुवर्णं च हिरण्यं चान्यच्च कृताकृतं त्रयो भागाः कर्तव्याः । एको बुद्धस्य । द्वितीयो धर्मस्य । तृतीयः संघस्य । यो बुद्धस्य तेन गन्धकुट्यां केशनखस्तूपेषु च खण्डस्फुट्टं[4] प्रतिसंस्कर्तव्यम् । यो धर्मस्य तेन बुद्धवचनं लेखयितव्यं सिंहासने वा उपयोक्तव्यम् । यः संघस्य स भिक्षुभिर्भाजयितव्यः ।

श्रावस्त्यां निदानम् । यदा राज्ञा प्रसेनजिता कोसलेन तोयिकामहः प्रस्थापितस्तदा तत्र भिक्षुभिक्षुण्युपासकोपासिकानां महासन्निपातो भवति । तेन खलु समयेन मूलफल्गुनो भिक्षुभिक्षुणीभावनीयः । तोयिकामहे प्रत्युपस्थिते संबहुलाभिर्भिक्षुणीभिरुक्तः । आर्य उपनिमन्त्रितो भव । तोयिकामहं गमिष्याम इति । स कथयति । कोऽत्र मम पात्रचीवरं स्थापयतीति ।

1 Ms. विक्रेय 181a, l. 6: བཙོངས་ལ། 2 181a, l. 6: དེས་ནི་ཇུས་འགོད་པའི་ཚེ།

3 Ms. साधारणम् 4 181b, l. 2: རལ་བ་དང་། འདྲུམས་པ།

द्वादशवर्गिकाभिर्भिक्षुणीभिरुक्तः। आर्य अल्पोत्सुको भव। वयं स्थापयामः। तेन तासां समर्पितम्। तत् ताभिरपि महाप्रजापत्ये[1] संन्यस्तम्। महाप्रजापत्यापि आयुष्मत आनन्दस्य। आयुष्मताप्यानन्देनान्यतमस्मिन्[2] विहारे स्थापितम्। तत आयुष्मान्मूलफल्गुनस्तोयिकामहं गतः। स तत्र भिक्षुणीभिरुपनिमन्त्रितः। एका कथयति। आर्येण ममाद्य पूर्वाह्णिका कर्तव्या। अपरया पूर्वाह्णिकया उपनिमन्त्रितः। अपरयापि। अपरा कथयति। आर्येण ममान्तिकाद्भोक्तव्यमिति। अपरापि। एवमेव कथयत्यपरापि। अपरा कथयति। आर्येण ममान्तिके कालपानकं पाययितव्यमिति। अपरापि। एवमेव कथयत्यपरापि। तेन तासामनुरक्षया स्तोकस्तोकं गृहीत्वा पूर्वाह्णिका कृता। तथैव वेलायां भुक्तमकाले पानकं च पीतम्। ततः स्तोकस्तोकेन प्रभूतं सम्पन्नम्। स चाध्वपरिश्रान्तः। तेन प्रभूतं भुक्तम्। सः अजीर्णो जातः। विषूचितः कालगतः। स भिक्षुभिः श्मशानं नीत्वा दग्धः। धर्मश्रवणं दत्तम्। अनुपूर्वेण विहारः प्रविष्टः। चीवरगोपकेन ग्लानोपस्थायिकः अभिहितः। आनय तस्य पात्रचीवरमिति। स कथयति। द्वादशवर्गिकानां हस्ते स्थापितम्। ताः पृष्टाः। कथयन्ति। अस्माभिर्महाप्रजापत्युर्हस्ते स्थापितम्। महाप्रजापतिः कथयति। मया आनन्दस्य संन्यस्तमिति। आयुष्मानानन्दः कथयति। मया अमुष्मिन् विहारे स्थापितम्। इत्येतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति।

1 Ms. ०पत्या 2 Ms. ०तमस्मै०

भगवानाह। आनन्देन स्थापितं भिक्षुणा प्रतिवस्तु[1] मृतपरिष्कारिकमधिष्ठातव्यम्। एवं च पुनरधिष्ठातव्यम्। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्ठवाचिकया भिक्षून् समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्। शृणोतु भदन्तः संघः। अस्मिन्नावासे मूलफल्गुनो भिक्षुः कालगतः। तस्य पात्रचीवरं सचीवरचीवरिकम्[2] आनन्दस्य हस्ते तिष्ठति। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघः। यत् संघो मूलफल्गुनस्य भिक्षोः पात्रचीवरं सचीवरचीवरिकमानन्देन भिक्षुणा प्रतिवस्तु[1] मृतपरिष्कारिकमधितिष्ठेदित्येषा ज्ञप्तिः। आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। अन्यत्र भदन्त भिक्षुः कालं कुर्यादन्यत्रास्य पात्रचीवरमन्यत्र प्रतिवस्तुकः। तत्पात्रचीवरं कस्य प्रापद्यते। योऽत्र[3] उदालिन् प्रतिवस्तुको भिक्षुर्गृही[4] वा।

श्रावस्त्यां निदानम्। तेन खलु समयेन नवकर्मिको भिक्षुः कालगतः। भिक्षवस्तस्य पात्रचीवरं कौकृत्यान्न भाजयन्ति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। सर्वसंघं सन्निपात्यासौ लक्षितव्यः। किं सम्भिन्नकारी[5] न वा इति। यदि सम्भिन्नकारी[5]। सांघिकं स्तौपिकं[6] करोति। स्तौपिकं वा सांघिकम्।

1 Ms. ०वस्तुना ; 182b, l. 4: ཤི་བའི་ཡོ་བྱད་ཀྱི་སྐྱིན་པར་དགེ་སློང་ཀུན་དགའ་བོ་བྱིན་གྱིས་བརླབས་པར་བྱའོ། For प्रतिवस्तु see above p. 127 n. 2. See also Mvyut. 279. 205 : ནོར་དང་འདྲ་བ།

2 183a, l. 1: གོས་ཀྱི་རིན་དུ་བཅས་པ=price of a *cīvara*. 3 Ms. यत्रो०

4 183a, l. 5: དགེ་སློང་ངམ། ཁྱིམ་པ་གང་ན་ཡོད་པའོ།

5 183a, l. 7: གལ་ཏེ་འདྲེས་ཏེ=if mixed. 6 Ms. स्तूपिकं

एवमधार्मिकम्[1] । तस्य पात्रचीवरं सचीवरचीवरिकं त्रीन् भागान् कर्तव्यम् । बुद्धस्य । धर्मस्य । संघस्य । सांघिको भिक्षुभिर्भाजयितव्यः । बुद्धसन्तकेन बुद्धपूजा वा गन्धकुट्यां स्तूपे वा नवकर्म कर्तव्यम् । धर्मसन्तकेन बुद्धवचनं वा लेखयितव्यम् । सिंहासने वा उपयोक्तव्यम् । न चेत् सम्भिन्नकारी सर्वमेव भिक्षुभिर्भाजयितव्यम् । नात्र कौकृत्यं करणीयम् ।

श्रावस्त्यां निदानम् । तेन खलु समयेन संबहुला भिक्षवो जनपदचारिकां चरन्तोऽनुपूर्वेण श्रावस्त्यामुपनगरमनुप्राप्ताः । तन्मध्यादेको भिक्षुः कालगतः । ते संलक्षयन्ति । बहिर्विहारस्य भाजयामः । विहारं प्रविष्टानां सब्रह्मचारिणोऽपि भागं प्रार्थयिष्यन्तीति । श्रावस्ती तन्निवासिभिर्गोपालकैः पशुपालकैस्तृणहारकैः काष्ठहारकैः पथाजीवैरुत्पथाजीवैश्च मनुष्यैः समन्तादाकीर्णा । ते यत्र यत्र निषीदन्ति भाजयाम इति तत्र तत्र महाजनेन परिवार्यन्ते । ते संलक्षयन्ति । विहारसमीपे भाजयाम इति । ते विहारसमीपे भाजयितुमारब्धाः । उपधिवारिकेण[2] दृष्टा उक्ताश्च । आयुष्मन्तः किं कुरुथ । तैर्यथावृत्तं समाख्यातम् । स कथयति । अहमपि[3] सीमाप्राप्त इति । तैस्तस्य विवाचयतो न दत्तम्[4] । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति ।

1 183b, l. 1: དེ་ལྟ་བུ་ཆོས་དང་མི་མཐུན་པ་ཡིན་པས །

2 184a, l. 3: དགེ་སྐོས་ཀྱིས=Supervisor of monks in a monastery.

3 Ms. वयमपि

4 184a, l. 4: དེས་འཁངས་ཀྱང་དེ་རྣམས་ཀྱིས་མ་བྱིན་པའི་སྐབས་དེ །

भगवानाह । अन्तःसीमायामन्तःसीमासंज्ञिनो मृतपरिष्कारं भाजयन्ति । अभाजितं दुर्भाजितम् । पुनरपि सीमाप्राप्तैः सह भाजयितव्यम् । अन्यथा सातिसाराः । एवमन्तःसीमायां वैमतिका[1] भाजयन्ति । अभाजितं दुर्भाजितम् । पुनरपि सीमाप्राप्तैः सह भाजयितव्यम् । अन्यथा सातिसाराः । बहिःसीमायामन्तःसीमासंज्ञिनो[2] मृतपरिष्कारं भाजयन्ति । अभाजितं दुर्भाजितम् । पुनरपि सीमाप्राप्तैः सह भाजयितव्यम् । अन्यथा सातिसाराः । बहिःसीमायां वैमतिका[1] भाजयन्ति । अभाजितं दुर्भाजितम् । पुनरपि सीमाप्राप्तैः सह भाजयितव्यम् । अन्यथा सातिसारा भवन्ति ।

श्रावस्त्यां निदानम् । तेन खलु समयेन भिक्षुणा भिक्षोर्हस्ते [भिक्षोश्ची]वराणि[3] प्रेषितानि । तेन भिक्षुणा येन प्रेषितानि तस्य विश्वासेन परिभुक्तानि[4] । एतत्प्रकरणं भिक्षवो भगवत आरोयन्ति । भगवानाह । अविश्वासे भिक्षवस्तेन भिक्षुणा विश्वासमुत्पादितम् । यस्य येन[5] भिक्षुणा प्रेषितानि तस्य तेन विश्वासेन परिभुक्तानि ।

अपि तु भिक्षुर्भिक्षोर्हस्ते भिक्षोश्चीवरकाणि प्रेषयति । यस्य प्रेषितानि तस्य विश्वासेन परिभुंक्ते । सुपरिभुक्तानि । येन प्रेषितानि तस्य विश्वासेन परिभुंक्ते । दुष्परिभुक्तानि ॥१॥ भिक्षुर्भिक्षोश्चीवराणि प्रेषयति । यस्य प्रेषितानि स कालगतः। येन प्रेषि-

1 184a, l. 6: ཡིད་གཉིས་ཀྱིས 2 Ms. ०संघिना 3 Ms. भिक्षाचीवराणि

4 Cf. *Vinaya*, I, p. 308-9, in which conclusions are otherwise.

5 184b, l. 6: འདི་ལྟར་ངེས་གང་གིས་བསྐུར་བ །

तानि तस्य विश्वासेन परिभुंक्ते[1]। दुष्परिभुक्तानि। यस्य प्रेषितानि तस्य कल्पेन तस्य मृतपरिष्कारिकमधितिष्ठति। स्वधिष्ठितानि॥२॥ भिक्षुर्भिक्षोश्चीवराणि प्रेषयति। येन प्रेषितानि स कालगतः। येन[2] प्रेषितानि तस्य कल्पेन मृतपरिष्कारिकमधितिष्ठति। दुरधिष्ठितानि॥३॥ भिक्षुर्भिक्षोश्चीवरकाणि प्रेषयति। यस्यं प्रेषितानि तेन प्रतिक्षिप्तानि। येन प्रेषितानि तस्य विश्वासेन परिभुंक्ते। [सुपरिभुक्तानि।] यस्य प्रेषितानि तस्य विश्वासेन परिभुंक्ते। दुष्परिभुक्तानि॥४॥ भिक्षुर्भिक्षोश्चीवरकाणि प्रेषयति। यस्य प्रेषितानि स कालगतः। यस्य प्रेषितानि तस्य कल्पेन मृतपरिष्कारिकमधितिष्ठति। स्वधिष्ठितानि। [येन प्रेषितानि] तस्य कल्पेन मृतपरिष्कारिकमधितिष्ठति। दुरधिष्ठितानि॥५॥ भिक्षुर्भिक्षोश्चीवरकाणि प्रेषियतिं। यस्य प्रेषितानि तेन प्रतिक्षिप्तानि। येन प्रेषितानि स च कालगतः। यस्य प्रेषितानि तस्य विश्वासेन परिभुंक्ते। दुष्परिभुक्तानि। येन[2] प्रेषितानि तस्य कल्पेन मृतपरिष्कारिकमधितिष्ठति। स्वधिष्ठितानि॥६॥ भिक्षुर्भिक्षोश्चीवरकाणि प्रेषयति। यस्य प्रेषितानि तेन प्रतिक्षिप्तानि। स कालगतः। येनापि प्रेषितानि स कालगतः। यस्य प्रेषितानि तस्य कल्पेन मृतपरिष्कारमधितिष्ठति। दुरधिष्ठितानि। येनापि प्रेषितानि तस्य कल्पेन मृतपरिष्कारमधितिष्ठति। स्वधिष्ठितानि॥७॥

॥ **चीवरवस्तु समाप्तम्** ॥

1 Ms. adds here दुष्परिभुंक्ते। 2 Ms. यस्य 3 Ms. यस्य

[कठिनवस्तुनि पिण्डो]द्दानम् ।

साकेतेन हि कस्यचिद् विचारितं[1] मर्दितं[2] चाप्यकालेन पुद्गलः ।
मातृकापदान्यकृतेन[3] [हि] विंशतिः करणीयेन[4] [तु] द्वादशिकाः ॥

[ उद्दानम् ]

साकेतेन वर्षोपगता शास्तुर्दर्शनकाम्यया ।
कर्दमे उष्णेन क्लान्तानां चीवरं तत्र संमतम् ॥

बुद्धो भगवान् श्रावस्त्यां वर्षा उपगतो जेतवने अनाथपिण्ड-[द]स्यारामे। तेन खलु समयेन संबहुला भिक्षवः साकेते वर्षा उपगताः । त्रयाणां वार्षिकाणां मासानामत्ययात् कृत्यचीवरा निष्ठितचीवराः समादाय[5] पात्रचीवरं बहुतृणे बहुकर्दमे उष्णेन क्लाम्यन्तः स्वेदपर्याकुलीकृतशरीरा येन श्रावस्तीं तेन चारिकां चरन्तः श्रावस्तीमनुप्राप्ताः । अथ संबहुला भिक्षवः पात्रचीवरं प्रतिशमय्य[6] पादौ प्रक्षाल्य येन भगवांस्तेनोपसंक्रान्ताः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तनिषण्णाः। धर्मता खलु बुद्धा भगवन्त आगन्तुकान् भिक्षूननया प्रतिसंमोदनया प्रतिसंमोदन्ते[7] । कुतो यूयं भिक्षव एतर्ह्यागच्छथ । कुत्र वास्थ[8] । वर्षा उषिता इति । प्रतिसंमोदते भगवानागन्तुकान् भिक्षूननया प्रतिसंमोदनया। सुखस्पर्शं वर्षा नेयाः । कुतो यूयं भिक्षव एतर्ह्यागच्छथ । कुत्र वास्थ[8] । वर्षा उषिताः । ते कथयन्ति । साकेताद्वयं भदन्त एतर्ह्यागच्छामः । साकेते वास्म । वर्षा उषिताः । कच्चिद्यूयं भिक्षवः साकेते सुखस्पर्शं

1 Ms. विवरितं ; 185b, l. 6 : རྡལ་བ । See p. 159.

2 *Ibid.* ཧྲངས་པ । See p. 160.

3 See p. 163.

4 185b, l. 6 : བགོས་པ་དག་ནི । See p. 168.

5 Ms. समाधाय

6 Cf. *Divyā.*, p. 493.

7 Cf. *Vinaya*, I, p. 253.

8 Ms. वास्थ ; Evidently for Sans. वसथ ; cf: Pāli : वसित्थ

वर्षा उषिता न वास्थ क्लान्ताः पिण्डकेन। तथ्यम्। वयं भदन्त साकेते सुखस्पर्शं वर्षा उषिताः। न वास्म[1] क्लान्ताः पिण्डकेन। अपि तु वयं समादाय[2] पात्रचीवरं बहुतृणे बहुकर्दमे उष्णेन क्लाम्यन्तः स्वेदपर्याकुलीकृतशरीरा जनपदचारिकां चरन्तः कृच्छ्रेणेहानुप्राप्ताः[3]। भगवान् संलक्षयति। क्लाम्यन्ति बत मे श्रावकाः। समादाय पात्रचीवरं बहुतृणे बहुकर्दमे उष्णेन क्लाम्यन्ति स्वेदपर्याकुलीकृतशरीरा जनपदचारिकां चरन्तः। यत्त्वहं भिक्षूणां स्पर्शविहारार्थं दातॄणां[4] च देयधर्मपरिभोगार्थं भिक्षूणां कठिनमनुजानीयां यस्मात्पंचानुशंसाः कठिनास्तरे। न दशाहपरमं न मासपरमं न रात्रिप्रवासः सान्तरोत्तरेण चीवरेण जनपदचारिकाप्रक्रमणं यावदास्त विकल्पकचीवरधारणमिति[5]। अपरेऽपि पंचानुशंसाः। न गणभोजनं न परंपरभोजनं न कुलेष्वनिमन्त्रितचारिका यावदास्त चीवरपर्येषणम्। कार्तिकान्मासाद् यावत्फाल्गुनो मासोऽत्रान्तरादास्तृतकठि[ना]नां लाभ इति विदित्वा भिक्षूनामन्त्रयते स्म। तस्मात्तर्हि भिक्षवोऽनुजानामि भिक्षूणां स्पर्शविहारार्थं दातॄणां[4] च देयधर्मपरिभोगार्थं वर्षोषितैर्भिक्षुभिः कठिनमास्तर्तव्यं यस्मात्पंचानुशंसाः कठिने। न दशाहपरमं पूर्ववद्यावदास्तृतकठिनानां [लाभः] [6]ख्यात इति।

1 Ms. वास्थ ; for Sans. वसामः ; Pāli वसिम्हा    2 Ms. समाधाय

3 186b, l. 4: Tib. marks here thus: འདུལ་བ་གཞི། བམ་པོ་རེ་བདུན་པ། See above p. 130.    4 Ms. दात्रीणां

5 187a, l. 1: ཆོས་གོས་ཟུང་བ་མ་ཡིན་པ་ཇི་ཙམ་འདོད་པ་འཆང་བ་ནམ་ཡིན་པའོ། Cf. Pāli *Vinaya*, I, p. 254: अनामन्तचारो असमादानचारो गणभोजनं यावदत्थचीवरं यो च तत्थ चीवरुप्पादो सो नेसं भविस्सति।

6 187a, l. 5-6: རྙེད་པ་ཡིན་ནོ་ཞེས་བྱ་བའི་བར་གོང་མ་བཞིན་ནོ།

उक्तं भगवता कठिनमास्तर्तव्यमिति । भिक्षवो न जानते कथमास्तर्तव्यमिति । भगवानाह । यद्वर्षोषितस्य संघस्य चीवर-लाभः संपद्यते तस्मादास्तर्तव्यम् । एवं च पुनरास्तर्तव्यम् । पूर्ववत्[1] सामग्र्यमारोचयितव्यम् । इदं चीवरम् । वर्षोषितस्य संघस्य चीवरलाभः सम्पन्नः । यदि संघस्याभिरुचितमनेन[2] चीवरेण संघस्य कठिनमास्तरिष्यति । ततः पश्चादपरस्मिन् दिवसे शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते एकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम् ।

शृणोतु भदन्तः संघः । इदं चीवरम् । वर्षोषितस्य संघस्य चीवरलाभः संपन्नः । संघस्य कठिनमभिरुचितमनेन[3] चीवरेण कठिनमास्तरितुम् । येनास्तीर्णकठिनादावासात्प्रक्रामतः[4] पुराण-चीवराणामप्यविप्रवासो भविष्यति प्रागेव नवकानाम् । स चेत्संघस्य प्राप्तकालः क्षमेतानुजानीयात् संघो यत्संघः इदं चीवरं कठिनार्थं संमन्येत । अनेन चीवरेण संघस्य कठिनमास्तरिष्यति । येनास्तीर्ण-कठिनादावासात्प्रक्रामतः पुराणचीवराणामप्यविप्रवासो भविष्यति प्रागेव नवकानामित्येषा ज्ञप्तिः । एवं च कर्म कर्तव्यम् ।

शृणोतु भदन्तः संघः । इदं चीवरम् । वर्षोषितस्य संघस्य चीवरलाभः संपन्नः । संघस्य चाभिरुचितं कठिनं स्तर्तुम् । तत्संघ इदं चीवरं कठिनार्थं संमन्यते । अनेन चीवरेण संघस्य कठिनमास्तरि-

1 187b, l. 1: རེ་ཞིག་ཐོག་མར་མཐུན་པའི་གོ་བ་བྱས་ཏེ །

2 Ms. ०रुचित्तम०

3 Ms. कठिनमभिभवितु०

4 187b, l. 5: ཆས་པ་ལ་ཆོས་གོས་རྙིང་པ་རྣམས་དང །

ष्यति। येनास्तीर्णकठिनादावासात्प्रक्रामतः पुराणचीवरकाणामप्य-विप्रवासो भविष्यति प्रागेव नवकानाम्। येषामायुष्मतां क्षमते इदं चीवरं कठिनार्थं संमन्तुमनेन चीवरेण संघस्य कठिनमास्तरिष्यति। येनास्तीर्णकठिनादावासात्प्रक्रामतः पुराणचीवरकाणामप्यविप्रवासो भविष्यति प्रागेव नवकानाम्। स तूष्णीम्। न क्षमते भाषताम्। संमतः संघेन। इदं चीवरं कठिनार्थम्। अनेन चीवरेण कठिन-मास्तरिष्यति। येनास्तीर्णकठिनादावासात्प्रक्रामतः पुराणचीवर-काणामप्यविप्रवासो भविष्यति प्रागेव नवकानाम्। क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि।

ततः पश्चात्कठिनास्तारको भिक्षुः संमन्तव्यः। पंचभिर्धर्मैः समन्वागतः कठिनास्तारको भिक्षुरसंमतो न संमन्तव्यः संमत-श्चावकाशयितव्यः। कतमैः पंचभिः। अवार्षिको वर्षाच्छिन्नकः पश्चि-मकां वर्षामुपगतोऽन्यत्र[1] वर्षोषितः शिक्षादत्तकः[2]। अपरैरपि पंचभिर्न संमन्तव्यः। पारिवासिको मूलपारिवासिको मानाप्य[चारो][3] मूलमानाप्यचार[4] उत्क्षिप्तकः[5]। अपरे पंच न संमन्तव्याः। छन्दा-द्गच्छति भयाद् द्वेषान्मोहाद् भयाद्गच्छति। आस्तृतं चानास्तृतं कठिनं न जानाति। पंचभिस्तु धर्मैः समन्वागतः कठिनास्तारको भिक्षुरसंमतश्च संमन्तव्यः संमतश्च [ना]वकाशयितव्यः। कतमैः

1 Ms. ०न्यत्तु 2 188b, l. 3 : བསླབ་པ་བྱིན་པའོ །
3 Cf. Mvyut. 264. 14 ; also मानत्व, Cf. Pāli : मानत्त।
4 188b, l. 4 : གཞི་ནས་མགུ་བར་བྱ་བ་སྤྱོད་པ་དང་ །
5 188b, l. 4 : གནས་ནས་ཕྱུང་བའོ །

पञ्चभिः। न च्छन्दाद्गच्छति न द्वेषान्न मोहान्न भयाद्गच्छति। आस्तृतानास्तृतं च कठिनं जानाति। एवं च पुनः संमन्तव्यः। शयनासनप्रज्ञप्तिं कृत्वा पूर्ववद्यावदुत्साहयितव्यः। उत्सहसे त्वमेवंनामा संघस्य कठिनमास्ततु मिति। स चेदुत्सहते न वक्तव्यमुत्सहेदिति। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। अयमेवंनामा कठिनास्तारको भिक्षुरुत्सहते संघस्य कठिनमास्ततु म्। स चेत्संघस्य प्राप्तकाल क्षमेतानुजानीयात् संघो यत्संघः एवंनामानं कठिनास्तारकम्। स घस्य कठिनमास्तरिष्यति। येषामायुष्मतां क्षमन्ते एवंनामानं कठिनास्तारकं संमन्तुम्। एवंनामा कठिनास्तारकः संघस्य कठिनमास्तरिष्यति। ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। संमतः संघेन एवंनामा कठिनास्तारकः संघस्य कठिनमास्तरिष्यति। क्षान्तमनुज्ञातं संघेन। यस्मात्तूष्णीमेवमेतद्धारयामि।

ततः कठिनास्तारकस्य भिक्षोर्ज्ञप्त्या कठिनमास्तरितव्यम्। श्रृणोतु भदन्तः संघः। इदं चीवरं संघेन कठिनार्थं संमतम्। अयं चैवंनामा कठिनास्तारको भिक्षुः संमतः। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत्संघः इदं चीवरं कठिनार्थमेवंनाम्नो भिक्षोरनुप्रदद्यादित्येषा ज्ञप्तिः[1]।

कठिनास्तारकस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। कठिनास्तारकेण भिक्षुणा कठिनेन सर्वं तु पूर्वंगमेन

1 Cf. Pāli *Vinaya*, I, p. 254

भवितव्यम्। धावता वितरता च्छिन्दता सीवता रंजयता[1]। अन्ततो द्वौ त्रयो वा सूचीपदका दातव्याः[2]। द्वौ त्रयो वा चित्तोत्पादा उत्पादयितव्याः। ततः पश्चादाश्वयुजमासे शुक्लपक्षे पंचदश्यामारोचयितव्यम्। श्वोऽहमायुष्मन्तः कठिनमास्तरिष्यामि। युष्माभिः स्वकस्वकानि चीवराणि प्रत्युद्धर्तव्यानीति। ततः कठिनास्तारकेण भिक्षुणा कठिनं गन्धपुष्पान्वितं सुरभिधूपधूपितं कृत्वा शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते वृद्धान्ते स्थापयितव्यम्। ततो वृद्धान्ते स्थित्वा कठिनं गृहीत्वा वक्तव्यम्।

श्रृणोतु भदन्तः संघः। इदं चीवरं संघेन कठिनं संमतम्। अहं चैवंनामा भिक्षुः कठिनास्तारकः। सोऽहमेवंनामा कठिनास्तारकस्तेन चीवरेण संघस्य कठिनमास्तरिष्यामीति। एवं द्विरपि त्रिरपि। तत आस्तीर्य संघस्थविरस्य पुरस्तात् स्थित्वा एवं वक्तव्यम्। समन्वाहर स्थविर इदं चीवरं संघेन कठिनं संमतम्। अहं चैवंनामा कठिनास्तारकः। तन्मया अनेन चीवरेण संघस्य कठिनमास्तृतमिति। तेन वक्तव्यम्। साध्वास्तृतं सुष्ठ्वास्तृतम्। योऽत्र लाभश्चानुशंसश्च सोऽस्माकमिति। एवं द्विरपि

1 189b, l. 7 : བཀྲུའོ། བཀྱངོ། དྲའོ། དྲུབོ། ཁ་སྒྱུར་རོ།

2 189b-190a, l. 1 : ཚུང་དུ་ན་ཁབ་ཀྱིས་བསྒྲུབས་གཉིས་སམ། གསུམ་ཡང་བཅོམ་པར་བྱའོ།

त्रिरपि यावत्संघनवकस्य सर्वैर्वक्तव्यम्। साध्वास्तृतं सुष्ठ्वास्तृतम्। योऽत्र लाभश्चानुशंसश्च सोऽस्माकमिति।

कठिनास्तारकेण भिक्षुणा कठिनं गृहीत्वा न प्रस्रावकुटिः न वर्चस्कुटिः न धूपागारं प्रवेष्टव्यम्। नाभ्यवकाशे स्थातव्यम्। न बहिःसीमां गन्तव्यम्। स चेद्गच्छति न तस्यां वस्तव्यम्। कठिनास्तारको भिक्षुर्यथाप्रज्ञप्तानासमुदाचारिकान् धर्मान् न समादाय वर्तते। सातिसारो भवति।

ततः कठिनास्तारकेण भिक्षुणा फाल्गुनमासे पंचदश्यां पुनरारोचयितव्यम्। श्व आयुष्मन्तः कठिनमुद्धरिष्यामि। यूयं स्वकस्वकानि चीवराण्यधितिष्ठतेति। यश्च तत्र लाभः संपन्नः स संघेन भाजयितव्यः।

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। कतीनां भदन्त कठिनमनास्तृतम्। पंचानामुदालिन्। अवार्षिकस्य वर्षाच्छिन्नकस्य पश्चिमकावर्षोपगतस्यान्यत्र वर्षोपगतस्य तस्मिन् कठिने आस्तीर्यमाणे असंमुखीभूतस्य। अपरेषामपि पंचानामनास्तृतम्। पारिवासिकस्य पर्युषितपरिवासस्य मानाप्यचारिकस्य चरितमानाप्यस्य शिक्षादत्तकस्य च[1]। कतीनां भदन्त नैव लाभो नानुशंसा। पंचानामुदालिन्। अदर्शनायोत्क्षिप्तकस्याप्रतिकर्मणायु[2]-त्क्षिप्तकस्याप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्तकस्यान्यत्र वर्षोषितस्य[3] भिन्ने च संघे अधर्मपाक्षिकस्य।

1 See p. 154.

2 Ms. °णायो°; 191a, l. 2: ཕྱིར་མི་བྱེད་པས་གནས་ནས་ཕྱུང་བ་དང་།

3 *Ibid.* དབྱར་ཕ་དད་པར་གནས་པ་དང་།

संबहुला भिक्षवो जनपदचारिकां चरन्तश्चौरैर्मुषितास्तेऽनुपूर्वेण श्रावस्तीमनुप्राप्ताः। भिक्षुभिर्दृष्टाः। स्वागतं स्वागतमायुष्मन्तः। कच्चित्सुखचर्या। कीदृश्यायुष्मन्तः सुखचर्या। चौरैर्मुषिताः स्मः। अस्माकमायुष्मन्तः प्रभूतो लाभः संपन्नः। यदि कठिनमुद्ध्रियते चीवरैर्युष्माकं संविभागं कुर्म इति। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मादनुजानामि चौरैर्मुषितकानां भिक्षूणामर्थाय कठिनमुद्धर्तव्यम्[1]। एवं च पुनरुद्धर्तव्यम्। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून् समनुयुज्य सर्वसंघे संनिषण्णे संनिपतिते एकेन[2] भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। यावदेवास्मिन्नावासे समग्रेण संघेन कठिनमास्तृतम्। संबहुलाश्च भिक्षवः चौरैर्मुषिता आगताः। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात् संघो यत्संघश्चौरैर्मुषितकानां भिक्षूणामर्थाय कठिनमुद्धरेदित्येषा ज्ञप्तिः। एवं च कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। यावदेवास्मिन्नावासे समग्रेण संघेन कठिनमास्तृतं संबहुलाश्च भिक्षवश्चौरैर्मुषितका आगतास्तत्संघश्चौरैर्मुषितकानां भिक्षूणामर्थाय कठिनमुद्धरति। एषामायुष्मतां क्षमन्ते चौरमुषितकानां भिक्षूणामर्थाय कठिनमुद्धरितुम्। ते तूष्णीम्। न क्षमन्ते भाषन्ताम्। उद्धृतं संघेन चौरमुषितकानां भिक्षूणामर्थाय। कठिनं क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि। यस्माद्

1 Cf. *Vinaya*, 1, p. 255 : कठिनस्स उब्भाराय also कठिनुद्धारो।

2 Ms. एतेन

यो लाभः संपन्नः स भाजयितव्यः । भाजिते यस्या[भि]प्रेतं तेन स्वकात् प्रत्यंशात् चोरमुषितकानां भिक्षूणां संविभागः कर्तव्यः ।

उद्दानम् ।

**वितरितं[2] विलिखितं[5] बन्धनी[3] गण्डूषं[7] पट्टिका[8] ।**

**उपधिः[9] परिषण्डश्च[10] पुराणं संनिहितं फुप्फुसम् ॥**

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति । लभ्यं[1] भदन्त वितरि[4]-तेन चीवरकेण कठिनमास्तर्तुम् । न लभ्यमुदालिन् । लभ्यं भदन्त विलिखितेन[5] दकशाटिकाचीवरेण[6] गण्डूषचीवरेण[7] पट्टिकाचीवरेण[8] प्लोतिकाचीवरेण[9] परिषण्डचीवरेण[10] पुराणचीवरेण[11] संनिहित-

1 लभ्यम्= རུང་ངོ་ ।= युक्तम् ।

2 प्रसारितम् or विचारितम्=stretched before marking the cloth by pencil as done by tailors. See p. 156. རྡོལ་བ ། In *Mvyut.* 280. 245 this Tib. word is equated to पैलोतिक ; but Pāli *Vinaya*, I, p. 254: चीवर-विचारण ।

3 Ms. बधुटी ; 192b, l. 4 : མཐའ་སྐོར ། Cf. Pāli *Vinaya*, I, p. 254: बन्धन or ओवट्टिकः,=putting false thread preliminary to sewing. See fn. 6.

4 Ms विहरितेन ; see above, fn. 2.

5 192b, l. 6: སྦྱོག་ཆགས་ཀྱིས་འཚལ་བ་དང ། also སྦྱིལ་བྲིས ।=figured i.e., marked cloth. But see Pāli *Vinaya*, I, p. 254: उल्लिखित ।

6 *Ibid.* ཆ་ག་བདབ་པ་དང ।=hemmed robe. See fn. 3.

7 *Ibid.* ལྷན་པ་ཧྲོ་བོས་བཏབ་པ་དང ། Cf. Mvyut. 279. 35 : गण्डूचिकः=ལྷན་པ་གོམ་ན་པ ། Cf. Pāli: कण्डूसकरण ।

8 *Ibid.* ལྷན་རིངས་ཅན་དང ། *Mvyut.* has མཐའ་སྐོར=पट्टिका, all round, circular.

9 *Ibid.* l. 7: གསོ་མའི་སེང་རས་ཀྱི་ཆོས་གོས་དང ।=उपधिः or प्लोतिकः । Cf. *Vinaya*, pp. 254, 297: अवधि ।

10 *Ibid.* ཟེགས་པ་དང ।=परिषण्डः । Cf. Pāli: परिभण्ड Mvyut. 273. 17 has བང་རིམ ।

11 *Ibid.* རྙིངས་པ་དང ।=पुराणम् ।

चीवरेण[1] फुप्फुसचीवरेण[2] कठिनमास्तर्तुम्। न लभ्यमुदालिन्।

उद्दानम्।

मर्दितं[3] चाप्यकालेन पुद्गलस्य त्रिचीवरम्
अकल्पिकमसंछिन्नं न कुर्यादूनपंचकम्।
असंमतमनास्तृतं बहिःसीमे न रोहति[4] ॥

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति। लभ्यं भदन्त मर्दितेन[3] चीवरेण कठिनमास्तर्तुम्। न लभ्यमुदालिन्। लभ्यं भदन्त अकालचीवरेण पौद्गलिकया संघाट्या उत्तरासंगेनान्तर्वासेनाकल्पिकेन[5] चीवरेण अच्छिन्नकेन ऊनपंचकेन असंमतेन कठिनास्तारकेण बहिःसीमासंमतेन कठिनचीवरेण बहिःसीमासंमतेन कठिनास्तारकेण कठिनमास्तर्तुम्। न लभ्यमुदालिन्।

उद्दानम्।

कालिकं चापि त्रैमास्यमहतं[6] चैव कल्पितम्[7]।
आत्ययिकं[8] पैलोतिकं[9] पुद्गलस्य त्रिचीवरम्॥

लभ्यं भदन्त कालिकेन चीवरेण संघस्य कठिनमास्तर्तुम्। लभ्यमुदालिन् यो भदन्त त्रैमास्यात्ययात्संघस्य चीवरलाभः संपद्यते [तेन] कठिनमास्तर्तुम्। लभ्यमुदालिन्। अहतचीवरेण

1 192b, l. 6: སྙངས་པ་དང། = संनिहितम्; Pāli सन्निधिकतेन।

2 *Ibid.* དེངས་པས། Cf. Mvyut. 280. 246: फुस्फुसम् = སྤྱོད་རྙེང་ཁྲིར་བ།

3 193a, l. 3: བརླངས་པ། See above, p. 151. Cf. *Vinaya*, I, p. 254: कम्बलमद्दनमत्तेन

4 193a, l. 2: མི་སྐྱོད།

5 193a, l. 3: མི་རུང་བ། = अकल्पितम्। 6 193a, l. 7: སར་པ = new.

7 193a, l. 7: བརྡགས་པ་ཉིད། 8 193b, l. 3: སྤོངས་པ།

9 *Ibid.* གསོ་མའི་སོང་རས། See p. 159, n. 9.

लभ्यम्। अहतकल्पितेन लभ्यम्। [1]आत्ययिकचीवरेण लभ्यम्। पैलोतिकचीवरेण लभ्यम्[2]। पौलोतिकया संघाट्या न लभ्यम्। [ लभ्यं भदन्त पौद्गलिकया संघाट्या कठिनमास्तर्तुम्[3]। लभ्यं] स चेत्संघेन निसृष्टो भवति। एवमुत्तरासंगेनान्तर्वासेन।

उद्दानम्।

पौद्गलिकं गार्हपतिकं पंचकं साधिकपंचकम्।
संमतमास्तृतं चैव अन्तःसीमे वरोहति॥

लभ्यं भदन्त पौद्गलिकेन चीवरेण कठिनमास्तर्तुम्। न लभ्यमुदालिन्। [4]लभ्यं स चेत्संघे[न] निसृष्टो भवति। गृहपतिचीवरेण न लभ्यम्। लभ्यं स चेत्संघेन निसृष्टो भवति। पंचकेन लभ्यम्। साधिकेन पंचकेन लभ्यम्। संमतेन कठिनचीवरेण कठिनास्तारकेण लभ्यम्। अन्तःसीमासंमतेन कठिनचीवरेण लभ्यम्। अन्तःसीमासंमतेन कठिनास्तारकेण लभ्यम्।

अष्टौ मातृकापदानि कठिनोद्धाराय संवर्तन्ते। कतमे अष्टौ। प्रक्रमणं निष्ठापनं संनिष्ठापनं नाशितं श्रवणं सीमातिक्रान्तमाशाच्छेदकं कठिनोद्धारमेवाष्टमम्[5]। प्रक्रमणान्तिकः कठिनोद्धारो निष्ठापनान्तिकः संनिष्ठापनान्तिको नाशितान्तिकः श्रवणान्तिकः सीमातिक्रान्तिकः आशाच्छेदकः कठिनोद्धार एवाष्टमः।

1 See p. 160, fn. 8 2 Tib. omits this sentence.

3 193b. 1, 3: Tib. adds here བཙུན་པ་གང་ཟག་གི་སྣམ་སྦྱར་གྱིས་སྲ་བརྐྱང་འདིངསུ་རུང་ལགས་སམ །

4 Ms. adds here न

5 Ms. puts here न। Cf. Pāli *Vinaya*, I. p. 255: अट्ठिमा भिक्खवे मातिका कठिनस्स उब्भाराय पक्कमन्तिका निट्ठानन्तिका सन्निट्ठानन्तिका नासनन्तिका सवनन्तिका आसावच्छेदका सीमातिक्कन्तिका सहुब्भाराति।

प्रक्रमणान्तिकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरः समादाय पात्रचीवरं बहिःसीमां प्रक्रामत्यपुनरागमनाय। तस्य प्रक्रमणान्तिकः कठिनोद्धारः ॥१॥

निष्ठापना[न्तिकः] कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति[1]। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥२॥

संनिष्ठापनान्तिकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि नापि चीवरं करिष्यामीति। तस्य संनिष्ठापनान्तिकः कठिनोद्धारः ॥३॥

नाशितान्तिकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। स तदारभते। आरब्धं तु नश्यति। तस्य नाशितान्तिकः कठिनोद्धारः ॥४॥

श्रवणान्तिकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रा-

1 194a, l. 7; ཕྱིར་འོང་ཞིང་ཆོས་གོས་བྱའོ་སྙམ་པ་ལས་དེ་འདི་སྙམ་དུ་རེ་ཞིག་དེ།

मति। प्रत्येष्यामि चीवरं करिष्यामीति। समग्रेण च संघेन कठिनमुद्धृतमिति श्रुत्वा चाभ्यनुमोदते। साधूद्धृतं सुष्ठूद्धृतमिति। तस्य श्रवणान्तिकः कठिनोद्धारः ॥५॥

सीमातिक्रान्तिकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि न प्रत्येष्यामीति सीमां चातिक्रामति। तस्य सीमातिक्रान्तिकः कठिनोद्धारः ॥६॥

आशाच्छेदकः कठिनोद्धारः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। तस्य या सा चीवरप्रत्याशा सा सर्वेण सर्वं समुच्छिद्यते। तस्याशाच्छेदकः [कठिनोद्धारः] ॥७॥

कठिनोद्धार एवाष्टमः कतमः। यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति चागत्य[1] कठिनोद्धारं प्रत्यनुभवति। तस्य कठिनोद्धार एवाष्टमः ॥८॥

उद्दानम्।

अकृतेन हि विंशतिं वि[प्र]कृतेन[2] हि विंशतिम्।
आशया विंशतिं कुर्यादनाशया चैव विंशिकाम्॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति।

1 195b, l. 1: དེ་ཡང་སླར་འོང་ལ་ཞིང །

2 Cf. Pāli: विप्पकत ; 195b, l. 2: བཅོམས་པ །

तस्यैवं भवति । न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥१॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । तस्यैवं भवति । न हैव प्रत्येष्यामि नापि चीवरं करिष्यामीति । तस्य संनिष्ठापनान्तिकः कठिनोद्धारः ॥२॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । स तदारभते । आरब्धं चास्य नश्यति । तस्य नाशितान्तिकः कठिनोद्धारः ॥३॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं[1] करिष्यामीति । समग्रेण च संघेन कठिनमुद्धृतम् । स शृणोति समग्रेण संघेन कठिनमुद्धृतमिति । श्रुत्वा चाभ्यनुमोदते । साधूद्धृतं सुष्ठूद्धृतमिति । तस्य श्रवणान्तिकः कठिनोद्धार इति ॥४॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । तस्य तत्र[2] गतस्यैवं भवति । न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥५॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । तस्य तत्र

1 Ms. चीवरकं

2 196a, l. 4: དེ་དེར་སོང་ནས །

गतस्यैवं भवति । न हैव प्रत्येष्यामि चीवरं करिष्यामीति । तस्य संनिष्ठापनान्तिकः कठिनोद्धारः ॥६॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । स तत्र गत आरभते । आरब्धं चास्य नश्यति । तस्य नाशितान्तिकः कठिनोद्धारः ॥७॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । समग्रेण संघेन कठिनमुद्धृतम् । स शृणोति समग्रेण संघेन कठिनमुद्धृतमिति । स श्रुत्वा चानुमोदते । साधूद्धृतं सुष्ठूद्धृतमिति । तस्य श्रवणान्तिकः कठिनोद्धारः ॥८॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरः [1]पलिगोधसंततिर्बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । तस्यैवं भवति । न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥९॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । तस्यैवं भवति । न हैव प्रत्येष्यामि नापि चीवरं करिष्यामीति । तस्य [सं]निष्ठापनान्तिकः कठिनोद्धारः ॥१०॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति । प्रत्येष्यामि चीवरं करिष्यामीति । स तदारभते । आरब्धं चास्य नश्यति । तस्य

1 The Tib. translator has missed this additional word.

नाशितान्तिकः कठिनोद्धारः ॥११॥ यथापि तद्भिक्षुरास्तीर्णकठिना-दावासादकृतचीवरोऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। समग्रेण च संघेन कठिनमुद्धृतम्। स शृणोति समग्रेण संघेन कठिनमुद्धृतमिति। श्रुत्वा चाभ्यनुमोदते। साधूद्धृतं सुष्ठूद्धृतमिति। तस्य श्रवणान्तिकः कठिनोद्धारः ॥१२॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठित-चीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। तस्य तत्र गतस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनो-द्धारः ॥१३॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरो-ऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। तस्य तत्र गतस्यैवं भवति। न हैव प्रत्येष्यामि नापि चीवरं करिष्यामीति। तस्य [सं]निष्ठापनान्तिकः कठिनोद्धारः ॥१४॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृत-चीवरोऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। स तत्र गत आरभते। आरब्धं चास्य नश्यति। तस्य नाशितान्तिकः कठिनोद्धारः ॥१५॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरः पलिगोधसंततिर्बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति। समग्रेण संघेन कठिनमुद्धृतम्। स शृणोति समग्रेण संघेन कठिनमुद्धृतमिति। श्रुत्वा चाभ्यनुमोदते।

साधूद्धृतं सुष्ठूद्धृतमिति। तस्य श्रवणान्तिकः कठिनोद्धारः ॥१६॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्बहिःसीमां[1] प्रक्रामति। किं नु प्रत्येष्यामि। आहोस्विन्न प्रत्येष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥१७॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्बहिःसीमां प्रक्रामति। किं नु प्रत्येष्यामि। आहोस्विन्न प्रत्येष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य संनिष्ठापनान्तिकः कठिनोद्धारः ॥१८॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्बहिःसीमां प्रक्रामति। किं नु प्रत्येष्यामि। आहोस्विन्न प्रत्येष्यामीति। स तदारभते। आरब्धं चास्य नश्यति। तस्य नाशितान्तिकः कठिनोद्धारः ॥१९॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्बहिःसीमां प्रक्रामति। किं नु प्रत्येष्यामि। आहोस्विन्न प्रत्येष्यामीति। समग्रेण संघेन कठिनमुद्धृतम्। श्रुत्वा चाभ्यनुमोदते। साधूद्धृतं सुष्ठूद्धृतमिति। तस्य श्रवणान्तिकः कठिनोद्धारः ॥२०॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। प्रत्येष्यामि चीवरं करिष्यामीति।

1 198a, l. 2: ཐེ་ཚོམ་ཟ་བཞིན་མཚམས་ཀྱི་ཕྱི་རོལ་དུ་སོང་བས་ལས །

तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः। पूर्वस्यां [1]विचिकित्सायामकृतचीवरोऽनिष्ठितचीवर इत्युक्तानिष्ठितचीवर इत्यपनीय विप्रकृतचीवर इति दत्त्वा नानाकारेणापरा विंशतिः कार्या ॥१-२०॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति आशया प्रत्येष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः। आशयेत्यनेन विशेषेण पूर्ववदपरा विंशतिः[2] कार्या ॥१-२०॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। [अ]नाशया प्रत्येष्यामि चीवरं करिष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः। अनाशये[त्यने]न विशेषेणापरा विंशतिः[2] कार्या ॥१-२०॥

उद्दानम्।
**करणीयेन द्वादशिका पर्येषणात्तथा तथा।**
**देशेन पंचिकां कृत्वा आवासेन च पंचिकाम् ॥**

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। करणीयेन प्रत्येष्यामि चीवरं करिष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥१॥

1 Ms. विसिकाया०  2 Ms. विंशिका

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। करणीयेन प्रत्येष्यामि चीवरं करिष्यामीति। तस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु नापि चीवरं[1] करिष्यामीति। तस्य संनिष्ठापनान्तिकः कठिनोद्धारः॥२॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। करणीयेन[2] प्रत्येष्यामि चीवरं करिष्यामीति। स तदारभते। आरब्धं चास्य नश्यति। तस्य नाशितान्तिकः कठिनोद्धारः॥३॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। करणीयेन प्रत्येष्यामि चीवरं करिष्यामीति। समग्रेण च संघेन कठिनमुद्धृतम्। स शृणोति समग्रेण संघेन कठिनमुद्धृतमिति। श्रुत्वा चाभ्यनुमोदते। साधूद्धृतं सुष्ठूद्धृतमिति। तस्य श्रवणान्तिकः कठिनोद्धारः॥४॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति। करणीयेन प्रत्येष्यामि चीवरं करिष्यामीति। तस्य तत्र गतस्यैवं भवति। न हैव प्रत्येष्यामि। अपि तु चीवरं करिष्यामीति। तस्य निष्ठापनान्तिकः कठिनोद्धारः॥५॥ यथापि तत्र गतस्येत्यनेन विशेषेण निष्ठापनान्तिक उक्तः। एवं संनिष्ठापनान्तिकः॥६॥ नाशितान्तिकः॥७॥ श्रवणान्तिकः॥८॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्बहिःसीमां प्रक्रामति। करणीयेन किं नु प्रत्येष्यामि। आहोस्विन्न प्रत्येष्यामीति।

1 Ms. चीवरकं

2 Ms. throughout करणे येन

तस्यैवं भवति। न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । [तस्य] निष्ठापनान्तिकः कठिनोद्धारः ॥९॥ यथा विचिकित्सासं-[ततिरित्यनेन विशेषेण] निष्ठापनान्तिक उक्तः । एवं संनिष्ठापनान्तिकः ॥१०॥ नाशितान्तिकः ॥११॥ श्रवणान्तिकः ॥१२॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरो[ऽनिष्ठितचीवरो] बहिःसीमां प्रक्रामति । पर्येषणाय प्रत्येष्यामि चीवरं करिष्यामीति । तस्यैवं भवति । न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । तस्य निष्ठा[प]नान्तिकः कठिनोद्धारः ॥१॥ पर्येषणेत्यनेन पूर्ववदपरो द्वादशिकः ॥२-१२॥

यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो बहिःसीमां प्रक्रामति देशानुप्रेक्षी अपुनरागमनाय । तस्य प्रक्रमणान्तिकः कठिनोद्धारः ॥१॥ यथापि तद्भिक्षुरास्तीर्णकठिनादावासादकृतचीवरोऽनिष्ठितचीवरो विचिकित्सासंततिर्देशानुप्रेक्षी बहिःसीमां प्रक्रामति । किं नु [3]प्रत्येष्यामि । आहोस्विन्न प्रत्येष्यामीति । तस्यैवं भवति । न हैव प्रत्येष्यामि । अपि तु चीवरं करिष्यामीति । तस्य निष्ठापनान्तिकः कठिनोद्धारः ॥२॥ एवं संनिष्ठापनान्तिकः ॥३॥ नाशितान्तिकः ॥४॥ श्रवणान्तिकः ॥५॥

यथा देशानुप्रेक्षणपंचिका । एवमावासप्रेक्षणपंचिका ॥१-५॥[1]

॥ कठिनवस्तु समाप्तम् ॥

1 200b, l. 6 : Tib. ends here a section : འདུལ་བ་གཞི། སམ་པོ་རེ་བརྒྱད་པ། See above, p. 152.

[ कोशाम्बकवस्तुनि ] उद्दानम् ।

कोशाम्बकानां कलहो नानावादश्च भिक्षुभिः ।
पाठे विवदमानानां दीर्घिकस्य च चारिका[1] ॥
भृगुश्च लवणागारे[2] रक्षितो[3] वनषण्डहस्तिना ।
अनिरुद्धश्चेति कृत्वा श्रावस्त्यां व्युपशाम्यति ॥

बुद्धो भगवान् कोशाम्ब्यां[4] विहरति घोषिलारामे[5]। तेन खलु समयेन कोशाम्बको भिक्षुर्व्याडो विक्रान्तः सूत्रधरो विनयधरो मातृकाधरः। बहवश्चास्य भिक्षवः सहायका[6] व्याडा विक्रान्ताः सूत्रधरा विनयधरा मातृकाधराः। वैशाल्यां वैशालको भिक्षुर्व्याडो विक्रान्तः सूत्रधरो विनयधरो मातृकाधरः। बहवश्चास्य भिक्षवः सहायका[6] व्याडा विक्रान्ताः सूत्रधरा विनयधरा मातृकाधराः।

अथ वैशालको भिक्षुरपरेण समयेन जनपदचारिकां चरन् कोशाम्बीमनुप्राप्तः। स मार्गश्रमं प्रतिविनोद्य कोशाम्बकस्य भिक्षोः सकाशमुपसंक्रान्तः। उपसंक्रम्य परस्परं प्रतिविनोद्य सूत्रविनयाभिधर्मेषु विनिश्चयं कर्तुमारब्धौ। तत्रैकः कथयति। एवमेतत् सूत्रं पठितव्यम्। अयमस्य सूत्रस्यार्थः। द्वितीयः कथ-

1 200b, l. 7: རིང་པོ་ལོན་ཀྱི་སྤྱོད་པ་དང | See p. 182: दोर्घिलः ।

2 *Ibid*· ངན་སྤྱོང་ལན་ཚ་ཁང་པ་དང |

3 Ms. लच्चिता; 201a. 1. 1: བསྲུངས |

4 Ms. writes कोशाम्बी rarely कौशाम्बी; in Tib. ཀཽ་ཤམ་བི |

5 Pāli: घोषितारामे

6 Ms. always सहायिकाः

यति। नेदं सूत्रमेवं पठितव्यम्। नास्य सूत्रस्यायमर्थः। [तव] अयुक्तम्। मम युक्तम्[1]। तव सहितम्। ममासहितम्। तवेति। ततस्तयोः परस्परं वैरुद्धमुत्पन्नम्[2]। कोशाम्बको भिक्षुर्वैशालकस्य रन्ध्रान्वेषणतत्परस्तिष्ठते[3]।

संघेन चायमेवंरूपः क्रियाकारः कृतः। यः पश्येद्वर्चस्कुम्भिकां रिक्तां तुच्छां निरुदकां तेनोदकस्य पूरयित्वा यथास्थाने स्था[पयि]तव्या उपधिवारिकस्य वारोचयितव्या। वर्चस्कुम्भिका रिक्ता तिष्ठतीति। न चेदात्मना पूरयति नाप्युपधिवारिकस्यारोचयति तस्यानादरो भवति। अनादराच्च तं वयं पायन्तिकामापत्तिं देशयिष्याम इति।

यावदन्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः। तत्र केचिद्भिक्षवो भोक्तुं गताः। केचिद् गन्तुकामाः। वैशालकस्तु भिक्षुर्वर्चस्कुम्भिकामादाय वर्चस्कुटिं प्रविष्टः। तस्य सार्धंविहारी त्वरितगतिप्रचारतया शब्दयितुं गतः। उपाध्याय केचिद् भिक्षवो भोक्तुं गताः केचिद् गन्तुकामाः। आगच्छत गच्छाम इति। स तेन सार्धं वर्चस्कुम्भिकामेकस्मिन् स्थाने स्थापयित्वा संप्रस्थितः। स च कोशाम्बको भिक्षुस्तं प्रदेशमनुप्राप्तः। ततोऽसौ वैशालको भिक्षुः पुरस्ताद्वर्चस्कुम्भिकां गृहीत्वा विहारं प्रवेष्टुमारब्धः। सार्धंविहारिणा उच्यते।

1 Ms. ममायुक्तम्   2 Ms. वैरुद्ध्य० ; 201b, 1. 3: མ་མཐུན་པར་གྱུར་ནས།

3 Ms. ०न्वेषीतत्पुरो ति० ; *Ibid.* : ཀླན་ཀ་ཚོལ་པ་ལྷུར་ལེན་ཅིང་།

उपाध्याय किं भूयः प्रविशसि । स कथयति । पुत्र ममायं कोशाम्बको भिक्षुरवतारप्रेक्षी । वर्चस्कुम्भिकां पूरयितुं प्रविशामि । किमियं सर्वेण सर्वं रिक्ता । न सर्वेण सर्वम् । अपि तु न लभ्यमनेनोदकेनोदककृत्यं कर्तुम् । उपाध्याय केवलं सर्वेण सर्वं रिक्ता भवतु । वयमुपाध्यायस्य पक्षो बलं सहायकाः । आगच्छत । गच्छामः । स तां तत्रैव स्थापयित्वा तेन सार्धं गतः । कोशाम्बकेन भिक्षुणा दृष्टा सा च कुम्भिका परामृष्टा[1] । ततः संजातामर्षो हुमिति कृत्वा वर्चस्कुम्भिकां पूरयित्वा उदककार्यं कृत्वा गतः । ततो भुक्ते भिक्षुसंघे विहारमागते भिक्षून् [2]प्रचारयितुमारब्धः । आयुष्मन्तः अनेन भिक्षुणा वैशालकेन संघस्य क्रियाकारो भग्न इति । ततो यथावृद्धिकया[3] सामीचीं कुर्वाणोऽनुपूर्वेण तस्य सकाशमुपसंक्रान्तः । कथयति । आयुष्मन् अवकाशं कुरु । कृतो भवतु । आपत्तिरस्यापन्ना[4] । यथाधर्मं कुरु । न पश्याम्यापत्तिम् । ननु संघेन क्रियाकारः कृतो यः पश्येद्वर्चस्कुम्भिकां रिक्तां तुच्छां निरुदकां तेनात्मना उदकस्य पूरयित्वा यथास्थाने स्थापयितव्या । उपधिवारिकस्य वारोचयितव्या । आयुष्मन् वर्चस्कुम्भिका रिक्ता तिष्ठतीति । न चेदात्मना पूरयति । नाप्युपधिवारिकस्यारोचयति । तस्यानादरो भवति । अनादराच्च तं वयं पायन्तिकामापत्तिं देशयिष्याम इति । स कथयति । न

1 202b, l. 1: མནམསོ། =smelling 2 Ms. परिचा॰ ; 202b l. 2: བསྒྲགས་པ།
3 202b, l. 3: དེ་ནས་རྒན་རིམས་ཇི་ལྟ་བ་བཞིན་དུ་གདུད་པ།
4 Ms. आपत्तिमस्यापन्नो

सा रिक्ता। मा भवतु रिक्ता। न लभ्यं तेनोदकेनोदककार्यं कर्तुम्। स तूष्णीमवस्थितः।

कोशाम्बको भिक्षुः कोशाम्ब्यां नैवासिको बहुपरिवारश्च। तेन तस्य बलादुत्क्षेपणीयं कर्म कृतमिति। वैशालका भिक्षवः क्षुब्धा इति। तत्र कोशाम्बकानां वैशालकानां च भिक्षूणामुत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुत आपन्न इति वा अनापन्न इति वा। यत्पुनरापन्नो नानापन्नः। उत्क्षिप्तो नानुत्क्षिप्तकः। यत् पुनरुत्क्षिप्तः अधर्मेण कर्मणा कोप्येन स्थापनार्हेणेति[1]। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। ततो भगवानुत्क्षिप्तकं भिक्षुमुत्क्षिप्तकानुवर्तकं भिक्षुमुत्क्षिप्तकानुवर्तका[नुवर्तकां]श्च दूतेन प्रक्रोश्ये-दमवोचत्। सत्यं युष्माकं भिक्षव उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति पूर्ववद्यावत् कोप्येन स्थापनार्हेणेति। सत्यं भदन्त। मा भिक्षवः कलहो मा भण्डनं मा विग्रहो मा विवादः। अपि तूत्क्षिप्त[क]स्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयामि। उत्क्षिप्तकेन भिक्षुणा एवं चित्तमुत्पादयितव्यम्। अयमुत्क्षेपको[2] भिक्षुर्व्याडो विक्रान्तः सूत्रधरो विनयधरो मातृकाधरः। बहवश्चास्य भिक्षवः सहायका व्याडा विक्रान्ताः सूत्रधरा विनयधरा मातृकाधराः। अहं चेदापत्तिं यथाधर्मं न प्रतिकुर्याम्[3]।

1 203a, l. 5-6: ཆོས་མ་ཡིན་པའི་ལས་འཁྲུད་པ་གཞག་པར་ འོས་པས །

2 Ms. ०मुत्क्षिप्तको ; 203b, l. 4: གནས་ནས་འབྱིན་པ་འདི་དགེ་སློང་འདི་ནི །

3 203b, l. 6: གལ་ཏེ་བདག་གིས་ལྟུང་བ་ཆོས་བཞིན་སླར་མ་བྱས་ན །

तेन संघः स कलहजातो विहरेद् भण्डनजातो विगृहीतो विवादमापन्नः। यत्त्वहमापत्तिं यथाधर्मं प्रतिकुर्यामिति। उत्क्षिप्तको भिक्षुर्यथाप्रज्ञप्तानासमुदाचारिकान् धर्मान्न समादाय वर्तते। सातिसारो भवति।

अथ भगवानुत्क्षिप्तकं भिक्षुमुत्क्षिप्तकानुवर्तकान् भिक्षूनुत्क्षिप्तकानुवर्तकानुवर्तकांश्चोद्योज्य उत्क्षेपकं[1] भिक्षुमुत्क्षेपकानुवर्तकान् भिक्षूनुत्क्षेपकानुवर्तकानुवर्तकांश्च दूतेन प्रक्रोश्येदमवोचत्। सत्यं युष्माकं भिक्षव उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा पूर्ववद्यावत् स्थापनार्हेणेति। सत्यं भदन्त। मा भिक्षवः कलहो मा भण्डनं मा विग्रहो मा विवादः। अपि तूत्क्षेपकस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। उत्क्षेपकेण भिक्षुणा एवं चित्तमुत्पादयितव्यम्। अयमुत्क्षिप्तको भिक्षुर्व्याडो विक्रान्तः सूत्रधरो विनयधरो मातृकाधरः। बहवश्चास्य भिक्षवः सहायका[2] व्याडा विक्रान्ताः सूत्रधरा विनयधरा मातृकाधराः। अहं चेदेनमकामं चोदयेयं स्मारयेयं[3] तेन संघः कलहजातो विहरेद् भण्डनजातो विगृहीतो विवादमापन्नः। यत्त्वहं तेनाकामकं [न] चोदयेयं [न] स्मारयेयमिति[4]। उत्क्षिप्तको भिक्षुर्यथाप्रज्ञप्तानासमुदाचारिकान् धर्मान् [न] समादाय वर्तते।

1 Ms. उत्क्षिप्तकं ; 2 Ms. सहायिकाः.

3 204b, l. 4: མི་འདོད་པ་གླིངས་སམ་དྲན་པར་བྱས་ན།

4 204b, l. 4: གླིང་བར་མི་བྱ་དྲན་པར་མི་བྱའོ།

सातिसारो भवति । एवमुच्यमाना अपि ते भिक्षवो भगवता कलह-जाता एव विहरन्ति भण्डनजाता विगृहीता विवादमापन्नाः । अप्येदानीं[1] पोषधेऽप्यपोषधमागमयन्ति । एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति ।

अथ भगवानुत्क्षिप्तकं भिक्षुमुत्क्षिप्तकानुवर्तकांश्च भिक्षूनुत्-क्षिप्तकानुवर्तकानुवर्तकांश्च[2] दूतेन प्रक्रोश्येदमवोचत् । सत्यं यूयं भिक्षव एवमुच्यमाना अपि मया कलहजाता एव विहरथ भण्डन-जाता विगृहीता विवादमापन्नाः । अप्येदानीं[1] पोषधेऽप्यपोषधमा-गमयथ । सत्यं भदन्त । मा भिक्षवः कलहो मा भण्डनं मा विग्रहो मा विवादः । कलहजातानां युष्माकं भिक्षवो विहरतां भण्डनजातानां विगृहीतानां विवादमापन्नानां यानि कर्माणि क्रियन्ते—पोषधः प्रवारणा ज्ञप्तिर्ज्ञप्तिद्वितीयं ज्ञप्तिचतुर्थं कर्म—कृतान्यकृतानि भवन्ति कोप्यानि[3] ।

नानासंवासिका यूयं भिक्षवस्तेषां भिक्षूणाम् । ते च युष्माकम् । तत्कस्य हेतोः । द्वाविमौ भिक्षवो नानासंवासिकौ । यश्चैवात्मनि चात्मानं नानासंवासिकं स्थापयति । यो वा संघेन धर्मतया स्थाप्यते । कथमात्मनैवात्मानं नानासंवासिकं स्थापयति । यथापि तद्भिक्षु-भिक्षूणां कलहजातानां विहरतां भण्डनजातानां विगृहीतानां विवादमापन्नानां पक्षापरपक्षव्यवस्थितानां[4] संचिन्त्य धर्मपक्षा-

1 For अपीदानीं

2 Ms. क्षेपकानुवर्तकश्च

3 205a, l. : འཁྲགས་པར་འགྱུར་ཞིང །

4 Ms. विवस्थापितानां ; 205b, l. 2: གནས་པ་ན་ཆེད་དུ །

दधर्मपक्षं संक्रामति एवमात्मनैवात्मानं नानासंवासिकं स्थापयति । कथं संघेन स्थाप्यः । यथापि तत्संघेनात्मना[दर्शना]योत्क्षिप्यते[1] । अप्रतिकर्मणि[2] अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्यते । एवं संघेन धर्मतया ।

द्वाविमौ भिक्षवः समानसंवासिकौ । कतमौ द्वौ । यश्चैवात्मनात्मानं समानसंवासिकं स्थापयति । यो वा संघेन धर्मतया स्थाप्यते । कथमात्मनैवात्मानं संवासिकं स्थापयति । यथापि तद्भिक्षुर्भिक्षूणां कलहजातानां विहरतां भण्डनजातानां विगृहीतानां विवादमापन्नानां पक्षापरपक्षव्यवस्थितानां संचिन्त्य [अ]धर्मपक्षाद् धर्मपक्षं[3] संक्रामति। एवमात्मनैवात्मानं समानसंवासिकं स्थापयति । कथं संघेन धर्मतया स्थाप्यते[4] । यथापि तत्संघेनादर्शनायोत्क्षिप्त ओसार्यते । अप्रतिकर्मणि[5] अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षिप्त ओसार्यते । एवं संघेन धर्मतया ।

अथ भगवानुत्क्षिप्तकं भिक्षुमुत्क्षिप्तकानुवर्तकान् भिक्षूनुत्क्षिप्तकानुवर्तकानुवर्तकांश्चोद्योज्य उत्क्षेपकं भिक्षुमुत्क्षेपकानुवर्तकान्[6] भिक्षूनुत्क्षेपकानुवर्तकानुवर्तकांश्च[6] दूतेन प्रक्रोश्येदमवोचत् । सत्यं यूयं भिक्षव एवमुच्यमाना अपि मया कलहजाता विहरथ भण्डनजाता विगृहीता विवादमापन्नाः । अपीदानीं[7] पोषधेऽप्य-

1 205b, l. 4: མ་མཐོང་བས་གནས་ནས་ཕྱུང་བ་དང །

2 Ms. ०कर्मणे

3 Ms. धर्मपक्षामधर्मपक्षं ; see 206a, l. 1.

4 Ms. स्थापिते

5 Ms. ०कर्मणे

6 Ms. ०काननुपरिवर्त०

7 See p. 178, n. 1.

पोषधमागमयथ[1]। सत्यं भदन्त। पूर्ववद्यावदेवमुच्यमाना अपि ते भिक्षवो भगवता कलहजाता एव विहरन्ति भण्डनजाता विगृहीता विवादमापन्नाः।

अन्यतमेन गृहपतिना बुद्धप्रमुखो भिक्षुसंघोऽन्तर्गृहे भक्तेनोपनिमन्त्रितः। भिक्षुसंघः प्रविष्टः। भगवानौपधिकेऽस्थादभिनिर्हृतपिण्डपातः। पञ्चभिः कारणैर्बुद्धा भगवन्त औपधिके तिष्ठन्त्यभिनिर्हृतपिण्डपाताः[2]। पूर्ववद्यावदस्मिंस्त्वर्थे भगवान् श्रावकाणां विनये शिक्षापदं प्रज्ञपयितुकाम औपधिकेऽस्थादभिनिर्हृतपिण्डपातः। तत्र चार्थि[क]प्रत्यर्थिकानां भिक्षूणां भोक्तुं प्रविष्टानामन्तर्गृहे उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति पूर्ववद्यावत्स्थापनार्हेण। अप्येदानीं[3] परस्परप्रहारिकामप्यागमयन्ति।

अथ पिण्डपाताभिनिर्हारको भिक्षुः पिण्डपातमादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य पिण्डपातमेकान्ते स्थापयित्वा भगवतः पादौ शिरसा वन्दित्वा पुरस्तादस्थात्। धर्मता खलु बुद्धा भगवन्तः [पिण्ड]पातनिर्हारकं[4] भिक्षुमनया प्रतिसंमोदनया प्रतिसंमोदन्ते। कच्चिद्भिक्षो प्रणीतं भक्तं सन्तर्पितो भिक्षुसंघ इति[5]। प्रतिसंमोदते बत भगवान् पिण्डपातनिर्हारकं भिक्षुमनया प्रतिसंमोदनया। कच्चिद्भिक्षो प्रणीतं भक्तं सन्तर्पितो भिक्षुसंघ इति। तथ्यं भदन्त। प्रणीतं भक्तं सन्तर्पितो भिक्षुसंघः। किं त्वर्थिकप्रत्यर्थिकानां भिक्षूणामन्तर्गृह उत्पन्नः कलहो भण्डनं

1 206a, l. 6: བྱེད་པ་བདེན་ནམ། 2 See p. 128. 3 See p. 178, n. 1.
4 Ms. भिक्षुपिण्डनिर्हारकं 5 See p. 130.

विग्रहो विवादो यदुतापन्न इति पूर्ववद् [ यावत् ] स्थापनार्हेण। अप्येदानीं[1] परस्परप्रहारिकामप्यागमिताः।

अथ भगवान् भक्तकृतिं कृत्वा बहिर्विहारस्य पादौ प्रक्षाल्य विहारं प्राविक्षत् प्रतिसंलयनाय। ततो भगवान् सायाह्ने प्रतिसंलयनाद् व्युत्थाय पुरस्ताद्भिक्षुसंघस्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान् भिक्षूनामन्त्रयते स्म। सत्यं युष्माकं भिक्षवः अन्तर्गृहे भोक्तुं प्रविष्टानामुत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा पूर्ववद्यावदप्येदानीं[1] परस्परप्रहारिकामप्यागमिताः। सत्यं भदन्त। मा भिक्षवः कलहो मा भण्डनं मा विग्रहो मा विवादः। अपि त्वर्थि[क]प्रत्यर्थिकानामहं भिक्षूणामन्तर्गृहे प्रविष्टानामासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। [2]अर्थिकप्रत्यर्थिकैर्भिक्षुभिरन्तर्गृहे प्रविष्टैरासनान्तरितैर्निषत्तव्यं यत्रैवंरूपस्या[न]नुलोमिकस्य कायसमुदाचारिकस्यावकाशो न भवति। अर्थि[क]प्रत्यर्थिका भिक्षवोऽन्तर्गृहे प्रविष्टा यथाप्रज्ञप्तानासमुदाचारिकान् धर्मान्न समादाय वर्तन्ते। सातिसारा भवन्ति। एवमुच्यमाना अपि भिक्षवो भगवता कलहजाता विहरन्ति भण्डनजाता विगृहीता विवादमापन्नाः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। तत्र भगवान् भिक्षूनामन्त्रयते स्म। मा भिक्षवः कलहो मा भण्डनं मा विग्रहो मा विवादः। कलहजाता यूयं भिक्षवो विहरन्तो भण्डनजाता विगृहीता

1 See p. 180 n. 1.

2 Ms. अर्थिकप्रत्यर्थिकः प्रत्यर्थिकै०

विवादमापन्ना उत्पन्नोत्पन्नान्यधिकरणानि दमयिष्यथ[1] व्युपशमयिष्यथ धर्मेण विनयेन शास्तुः शासनेन नेदं स्थानं विद्यते। अकल[ह]जातास्तु यूयं भिक्षवो विहरन्तः अभण्डनजाता अविगृहीता अविवादमापन्ना उत्पन्नोत्पन्नान्यधिकरणानि दमयिष्यथ शमयिष्यथ व्युपशमयिष्यथ धर्मेण विनयेन शास्तुः शासनेन स्थानमेतद्विद्यते।

भूतपूर्वं भिक्षवो ब्रह्मदत्तो नाम काशिराजो दीर्घिलश्च कोसलराजोऽन्योन्यं प्रति विरुद्धावभवताम्। विस्तरेण दीर्घिलसूत्रं मध्यमागमे समाधिसंयुक्तके। त एवमाहुः किं चापि। भगवानेवमाह।

दुःखं राजा ब्रह्मदत्तो भोगानां[2] च परिक्षयः।
विदेशमरणं दुःखं ज्ञातीनां चाप्यदर्शनम्॥

अथ भगवांस्तस्यां वेलायां गाथां भाषते।

पृथक्शब्दाः समजना[3] नेदं श्रेष्ठमिति मन्यताम्।
संघे हि भिद्यमाने हि नाबलं किञ्चि[4] मन्यताम्[5]॥

1 Ms. धमयिष्यम ; 208a, l. 7 : ཞི་བར་བྱ་བ་དང་།

2 Ms. रोगाणां ; 208b, l. 5 : ནོར་རྣམས།

3 Ms. समजवा

4 208b, l. 6 :

ཚིག་ས་མཐུན་ལ་ཕྱོགས་མཉམ་ཡང་འདི་གཙོ་མིན་ཞེས་སེམས་བྱེད་པ།
དགེའ་དུན་དབྱེ་བར་གྱུར་ན་གོ་མཐུ་ཆུང་ཅུང་ཟད་ཅེས་མི་བསམ།།

Cf. *Vinaya*, I, p. 349 :

पुथुसद्दो समजनो न बालो कोचि मञ्ञथ।
संघस्मिं भिज्जमानस्मिं न अञ्ञं भिय्यो अमञ्ञरुम्॥

Ms. मन्यतात्

अस्थिच्छिदां प्राणभृतां[1] गवाश्वधनहारिणाम् ।
राष्ट्रं विलुम्पतां चैव पुनर्भवति संगतिः[2] ।
युष्माकं न भवेत्कस्मादिमं धर्मं विजानताम्[3] ॥
परिमुष्टाः[4] पण्डिताभासा वाणीगोचरवादिनः ।
व्यायच्छतां मुखान्व्यामा[5] यदा नीता न तं[6] विदुः[7] ॥
परेऽत्र न विजानन्ति वयमत्रोद्यमामहे[8] ।
अत्र ये तु विजानन्ति तेषां शाम्यन्ति[9] मेधकाः[10] ॥

1 208b, l. 7: སྲོག་ཆགས་རྣམས་པ་གཅོག་པ་དང །

2 209a, l. 1: འདུམ་པར་འགྱུར་བ་ཉིད་ཡོད་ན །=reconciliation.

3 Cf. *Vinaya*, I, pp. 349, 395: अट्ठिच्छिन्ना पाणहरा गवास्सधनहारिणो ।
रट्ठं विलुम्पमानानं तेसम्पि होति संगति ।
कस्मा तुम्हाकं न सिया ॥

There is an alternative reading: अट्ठिच्छिदा

4 Ms. परमृष्टाः पण्डिताभाः सा 5 Ms. मुखाद्व्यामा 6 Ms. ते

7 209a, l. 2:

སྤྱོད་ཡུལ་སྨོན་པར་བྱེད་པའི་གསུང་ཆགས་ལ་རྨོངས་པ་སྨྲ་ལེན་པ །
བརྟགས་ན་མཁས་པར་སྣང་བ་ནི་གང་ལ་རྩོད་པ་དེ་མ་ཤེས ॥

Cf. *Vinaya*, I, p. 349, 395:

परिमुट्ठा पण्डिताभासा वाचागोचरभाणिनो ।
याव इच्छन्ति मुखायामं येन नीता न तं विदू ॥

This stanza is not intelligible either in Pāli or in Sanskrit, and so the Ms. reading is given here without any emendation. In *S.B.E.*, vol. XVII, p. 307, the English rendering given is as follows: "Bewildered are (even) the clever words of him who is versed in the resources of eloquence. As wide as they open their mouth. By whom they are led, they do not see." This rendering is based on Buddhaghosa's comments (see *Vinaya*, I, p. 395).

8 209a, l. 3: བརྩོན་ཞེས་བྱ་བར་མི་ཤེས་ཀྱི ། 9 Ms. शामीन्ति

10 Ms. मेषकः ; 209a, l. 3: གཟེ་བོ་མི་དགོས ། no use of memory. Cf. *Ibid*,

परे च न विजानन्ति मयमेत्थ यमामसे ।
ये च तत्थ विजानन्ति ततो सम्मन्ति मेधगा ॥

आक्रोशन्मामवोचन्मामजयन्मामहापयन्[1] ।
अत्र ये उपनह्यन्ति वैरं तेषां न शाम्यति[2] ॥
आक्रोशन्मामवोचन्मामजयन्मामहापयन्[1] ।
अत्र ये नोपनह्यन्ति वैरं तेषां प्रशाम्यति[3] ॥
न हि वैरेण वैराणि शाम्यन्तीह कदाचन ।
क्षान्त्या वैराणि शाम्यन्ति एष धर्मः सनातनः[4] ॥
वैरं न वैरेण हि जातु शाम्यते
शाम्यन्ति वैराणि अवैरिताभिः[5] ।
वैरप्रसंगे ह्यहिताय[6] देहिनां
तस्माद्धि वैरं न करोन्ति पण्डिताः[7] ॥

1 Ms. ०जापयः ; 209a, l. 4: བདག་ནི་འཕམ་གྱུར་པ །=defeated. In Pali: robbed.

2 Cf. *Vinaya*, I, p. 349:

अक्कोच्छि मं अवधि मं अजिनि मं अहासि मे ।
ये तं उपनय्हन्ति वेरं तेषं न सम्मति ॥

3 Cf. *Ibid.* अक्कोच्छि मं अवधि मं अजिनि मं अहासि मे ।
ये तं न उपनय्हन्ति वेरं तेषमुपसम्मति ॥

4 Cf. *Ibid.* न हि वेरेण वेराणि सम्मन्तीध कुदाचनम् ।
अवेरेण च सम्मन्ति एस धम्मो सनन्तनो ॥

The above four *ślokas* recur in the *Dhammapada*.

5 Ms. अवैरताभिः

6 Ms. वैरप्रसंगे हयहिताय नेहिनां

7 209a, l. 7:

ཁོན་ལ་ཆགས་པ་ལུས་ཅན་རྣམས་ལ་ཕན་མི་འགྱུར །
དེ་ལྟ་བས་ན་མཁས་པ་ཁོན་དུ་འཛིན་མི་བྱེད ॥

स चेल्लभेत निपकं सहायिकं
साधंचरं साधुविहारि[1]धीरम् ।
अभिभूय सर्वाणि परिस्रवाणि
चरेत तेनात्तमनाः प्रतिस्मृतः[2] ॥
नो चेल्लभेत निपकं सहायिकं
साधंचरं साधुविहारिधीरम् ।
राजेव राष्ट्रं विपुलं प्रहाय
एकश्चरेन्न च पापानि कुर्यात्[3] ॥
चरंश्चेन्नाधिगच्छेत श्रेयः सदृशमात्मनः ।
एकचर्यां दृढां कुर्यान्नास्ति बाले सहायता ॥
एकस्य चरितं श्रेयो न तु बाले सहायता ।
अल्पोत्सुकश्चरेदेको मातङ्गारण्यनागवत्[4] ॥

1 Ms. ०विहार

2 Cf. *Vinaya*, I, p. 349: सचे लभेथ निपकं सहायं सद्धिञ्चरं साधुविहारी धीरम् ।
अभिभुय्य सब्बानि परिस्सयानि चरेय्य तेनत्तमनो सतिमा ॥

209b, l. 1-2:

གལ་ཏེ་གྲོགས་པོ་འགྲུས་སྐྱོང་ལྡན་ཅིག་སྤྱོད་པ་དང་ །
ལེགས་པར་གནས་པ་བརྟན་པ་རྙེད་པར་གྱུར་ན་ནི །
ཟག་པར་འགྱུར་བ་ཐམས་ཅད་ཟིལ་གྱིས་མནན་བྱས་ནས །
དེ་དང་ཡིད་དགའ་དྲན་དང་ལྡན་ཞིང་སྤྱོད་པར་བྱ ॥

3 Cf. *Ibid.* नो चे लभेथ निपकं सहायं सद्धिञ्चरं साधुविहारी धीरम् ।
राजा व रट्ठं विजितं पहाय एको चरे मातङ्गरञ्ञे व नागो ॥

4 Cf. *Ibid.* एकस्स चरितं सेय्यो नत्थि बाले सहायता ।
एको चरे न च पापानि कयिरा । अप्पोस्सुक्को मातङ्गरञ्ञे व नागो ति ॥

एवमुक्ते कोशाम्बका भिक्षवो भगवन्तमिदमवोचन् । धर्मस्वामी भगवान् धर्मस्वामी सुगतः । एतेऽस्माकं वक्ष्यन्ति दुरुक्तानि दुर्भाषितानि । वयमेषां किमर्थं मर्षयाम इति । अथ भगवांस्तेषां भिक्षूणां तया ईर्यया चर्यया विप्रतिपत्त्या अनात्तमना अनभिराद्धस्तत एव ऋद्ध्या उपरि विहायसा प्र[क्रान्तो] येन श्रावस्ती तेन चारिकां प्रक्रान्तोऽनुपूर्वेण श्रावस्तीमनुप्राप्तः । श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे । तत्र स्विद्भगवति प्रक्रान्ते कोशाम्बकानां भिक्षूणां वैशालकानां च भिक्षूणामेवंरूपः ईर्यापथः संवृत्तः । पूर्वभक्तेऽपि पिण्डपातं प्रविशन्ति पश्चाद्भक्ते द्वारं बद्ध्वा[1] कलहं कुर्वन्ति । तथा[3] एषां तया ईर्यया चर्यया विप्रतिपत्त्या द्वादशवर्षाणि समतिक्रान्तानि । कोशाम्बका ब्राह्मणगृहपतयः संस्थागारे परस्परं संजल्पं कर्तुमारब्धाः । वयं भवन्तोऽत्यर्थं भगवतोऽभिप्रसन्नाश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः । अथ च पुनर्भगवतास्य गोचरस्य द्वादशवर्षाणि परित्यक्तस्याद्यत्वेनापि नागच्छतीति । अपरे कथयन्ति । भवन्तो भगवानिहागमिष्यतीति यत्वेदानीं कोशाम्बकानां भिक्षूणामियमेवंरूपा ईर्या चर्या विप्रतिपत्तिः । पूर्वभक्ते पिण्डपातं प्रविशन्ति पश्चाद्भक्ते द्वारं बद्ध्वा[1] कलिं कुर्वन्तीति। अपरे त्वाहुः । नायं भवन्त एषां दोषः[3] किं त्वस्माकं ये वयमेभ्यः पिण्डपातं प्रयच्छामः वाक्संभाषणं वा । एतं वयं क्रियाकारं व्यवस्थापयामः । नैषां

1 Ms. बधृा   2 Ms. तया

3 210b, 1. 3: ཉེས་པ་ཡོད་པ་མ་ཡིན །

केनचित्पिण्डको देयो वाक्संभाषणं चेति। ते क्रियाकारं कृत्वा व्यवस्थिताः। यावदपरस्मिन् दिवसे कोशाम्बका भिक्षवः पिण्डपातं प्रविष्टाः। न केनचिदाभाषिता नापि पिण्डको दत्तः। ते यथा धौतकेनैव पात्रेण पिण्डपातं प्रविष्टास्तथा धौतकेनैव निष्क्रान्ताः। अलब्ध्वैकां[1] भिक्षामपि ततस्तैः संभूय कोशाम्बका ब्राह्मणगृहपतय उक्ताः। भवन्तोऽयुक्तं तावद्यत्पिण्डपातं न प्रयच्छथ। अर्थपरिक्षय इति[2]। किमस्माभिरपराद्धं यद्वाचमपि न प्रयच्छथेति। ते कथयन्ति। यूयमपि श्रमणाः शाक्य[3]पुत्रीया इत्यात्मानं प्रतिजानीध्वे। येषां शास्ता[4] ईर्यया चर्यया विप्रतिपन्न्या अनात्तमना अनभिराद्धः। उपरि विहायसा प्रक्रान्तः। द्वादशवर्षाणि समतिक्रान्तान्यद्यत्वेनापि नागच्छतीति[5]। ते तूष्णीमेव स्थिताः। तेषां तु सकाशमुपसंक्रम्य[6] कथयन्ति। आयुष्मन्तः स्थाने वयमेभिरवसादिताः[7]। यः पृथिव्यां स्खलति स तामेव निःश्रृत्योत्तिष्ठति। सर्वथा श्रावस्त्यां गच्छामः। भगवन्तं क्षमयामो भिक्षुसंघं चेति।

अथ कोशाम्बका भिक्षवस्तस्या एव रात्रेरत्ययात् समादाय पात्रचीवरमप्रविश्यैव कोशाम्बीं येन श्रावस्ती तेन चारिकां प्रक्रान्ताः।

1 Ms. ०वं ; 210b, l. 6: བསོད་སྙོམས་གཅིག་ཀྱང་མ་རྙེད།

2 210b, l. 7: ནོར་ཟད་པར་གྱུར་ན་བསོད་སྙོམས་མི་སྟེར་བ་ནི་རིགས་ན།

3 Ms. शाक्ि० 4 Ms. एषां शास्तार 5 Ms. ०न्यद्वितीभि०

6 Ms. सकाशादपरस्य ; 211a, l. 3: དེ་རྣམས་ཀྱི་དྲུང་ནས་དོང་སྟེ་སྨྲས་པ།

7 211a, l. 3-4: དེ་རྣམས་ཀྱིས་བདག་ཅག་བཀྲུད་པ་ནི་ཐོག་ཏུ་བབ་སྟེ།

अश्रौषीदायुष्मानानन्दः कोशाम्बका भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका आधिकरणिकाः। यैरवमानितो भगवानिहागतः। तेऽस्मांश्चोदयिष्यन्ति स्मारयिष्यन्ति अलज्जितेन वा वैतरिकेण[1] वा यत्त्वहं भगवत आरोचयेयमिति विदित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्तेऽस्थात्। एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत्। श्रुतं मया भदन्त कोशाम्बका भिक्षव इहागच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिकाः। यैर्भगवानवमानित इहागतः। तेऽस्मांश्चोदयिष्यन्ति स्मारयिष्यन्ति अलज्जितेन वा वैतरेण[2] वा। एषामस्माभिः कथं प्रतिपत्तव्यम्। ते आनन्द भिक्षुभिर्नालपतव्या न संलपतव्या नावलोकयितव्या न विलोकयितव्या नान्यत्र हस्तव्यवहारकेण प्रत्यन्तिमानि शयनासनानि उद्देष्टव्यानि। यदि कथयन्ति वृद्धा वयं कस्मात्प्रत्यन्तानि शयनासनानि उद्दिश्यन्त इति। वक्तव्याः। यूयमपि श्रमणाः शाक्यपुत्रीया इत्यात्मानं प्रतिजानीध्वे येषां शास्ता ईर्यया चर्यया विप्रतिपत्त्या अनात्तमना अनभिराद्धस्तत एव ऋद्धा इहागतः कारुणिकः शास्ता येनैतदनुज्ञातम्। एतदपि युष्माकं न प्रापद्यत इति।

अश्रौषीन्महाप्रजापती गौतमी कोशाम्बका भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवाद-

1 21b, 1. 1: མགོ་བཙམ་པའི་ཕྱིར །

2 21b, 1. 5: མགོ་བཙམ་པ་ཉིད་དུ །

कारका आधिकरणिका इति श्रुत्वा च पुनरस्यैतदभवत्[1]। गच्छामि भगवन्तमवलोकयामीति तेषां मया कथं प्रतिपत्तव्यमिति विदित्वा येन भगवांस्तेनोपसंक्रान्ता। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णा। एकान्तनिषण्णा महाप्रजापती गौतमी भगवन्तमिदमवोचत्। श्रुतं मया भदन्त कोशाम्बका भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिका इति। तेषां मया कथं प्रतिपत्तव्यम्। कोशाम्बका भिक्षवस्त्वया गौतमि नालप्तव्या न संलप्तव्या नालोकयितव्या न व्यवलोकयितव्या नान्यत्तु सहदर्शनादेवासनं मोक्तव्यं ज्येष्ठपर्षदिति कृत्वा।

अश्रौषीदनाथपिण्डदो गृहपतिः कोशाम्बका भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिका इति श्रुत्वा च पुनरस्यैतदभवत्[1]। गच्छामि भगवन्तमवलोकयामि तेषां मया कथं प्रतिपत्तव्यमिति विदित्वा येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णोऽनाथपिण्डदो गृहपतिर्भगवन्तमिदमवोचत्। श्रुतं मया भदन्त कोशाम्बका भिक्षव आगच्छन्ति कलहकारका भण्डनकारका विग्रहकारका विवादकारका आधिकरणिका इति तेषां मया कथं प्रतिपत्तव्यमिति। कोशाम्बकास्त्वया गृहपते भिक्षवो नाल-

1 Ms. पुनरप्ये०

स्तव्या न संलप्तव्या नालोकयितव्या न व्यवलोकयितव्या न वन्दितव्याः पिण्डपातस्तु देयो दानं न विरुध्यते इति।

कोशाम्बका भिक्षवोऽनुपूर्वेण श्रावस्तीमनुप्राप्ताः। तत्र पात्र-चीवरं प्रतिशमय्य पादौ प्रक्षाल्य पृच्छन्ति। कः शयनासनोद्देशक इति। कल्पकारकैः समाख्यातम्। आर्यानन्द इति। ते येनायुष्मानानन्दस्तेनोपसंक्रान्ताः। उपसंक्रम्यायुष्मन्तमानन्दमिदमवोचत्। आयुष्मानानन्द अस्माकं शयनासनान्युद्दिश्य इति। आयुष्मानानन्दस्तेषां प्रत्यन्तिमानि शयनासनानि हस्त-व्यवहारेणोद्देष्टुमारब्धः। ते कथयन्ति। आयुष्मानानन्द वृद्धा वयम्। कस्मादस्माकं प्रत्यन्तिमानि शयनासनानि उद्दिश्यन्त इति। स कथयति। यूयमपि श्रमणाः शाक्यपुत्रीया इत्यात्मानं पूर्व-वद्यावदेतदपि युष्माकं न प्रापद्यत इति। ते संविग्नाः कृच्छ्रेण रात्रिमतिनामयन्ति। अथोत्क्षिप्तकस्य भिक्षो रात्र्याः प्रत्यूषसमये स्वसन्ततिं व्यवलोकयत एतदभवत्। यदस्माकमुत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा अनापन्न इति वा उत्क्षिप्तक[1] इति वा अनुत्क्षिप्तक इति वा। सोऽहमापन्नो नानापन्नः। उत्क्षिप्तो नानुत्क्षिप्तः। यत्पुनरुत्क्षिप्तो धर्मेण कर्मणा अकोप्येनास्थापनार्हेण। यत्त्वहं सन्धिं कुर्यां सामग्रीमिति विदित्वा कल्यमेवोत्थाय येनोत्क्षिप्त-कानुवर्त्तका भिक्षव उत्क्षिप्तका[नुवर्तका]नुवर्तकाश्च तेनोपसंक्रान्तः। उपसंक्रम्योत्क्षिप्तकानुवर्तकान् भिक्षूनुत्क्षिप्तकानुवर्तकानुवर्तकांश्चेदम-वोचत्। इह ममायुष्मन्तो रात्र्याः प्रत्यूषसमये स्वसन्ततिं व्यवलोकयतः

1 2 Ms. वुत्त्विप्तक

एतदभवत्। यन्निदानं ममोत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा अनापन्न इति वा उत्क्षिप्तक इति वा अनुत्क्षिप्तक इति। सोऽहमापन्नो नानापन्नः। उत्क्षिप्तो नानुत्क्षिप्तः। यत्पुनरुत्क्षिप्तो धर्मेण कर्मणा अकोप्येनास्थापनार्हेण। सन्धिं कुर्यां सामग्रीमिति। यूयं किं कथयथ। ते कथयन्ति। एवं भवतु। शोभनम्। अथोत्क्षिप्तको भिक्षुरुत्क्षिप्तका[नुवर्तका] भिक्षव उत्क्षिप्तकानुवर्तकानुवर्तकांश्च येनोत्क्षेपको भिक्षुरुत्क्षेपकानुवर्तका भिक्षव उत्क्षेपकानुवर्तकानुवर्तकांश्च तेनोपसंक्रान्तः। उपसंक्रम्योत्क्षेपकं भिक्षुमुत्क्षेपकानुवर्तकाननुवर्तकानुवर्तकांश्चेदमवोचत्। इह ममायुष्मन्तो रात्र्याः प्रत्यूषसमये स्वसन्ततिं व्यवलोकयत एतदभवत्। यन्निदानं ममोत्पन्नः कलहो भण्डनं पूर्ववद्यावत्सन्धिं कुर्यां सामग्रीमिति। यूयं किं करिष्यथ। ते कथयन्ति। एवं भवतु। शोभनमिति। स तेनोत्क्षिप्तको भिक्षुरुत्क्षिप्तकानुवर्तका भिक्षव उत्क्षिप्तकानुवर्तकानुवर्तका[1]उत्क्षेपको भिक्षुरुत्क्षेपकानुवर्तका भिक्षव उत्क्षेपकानुवर्तकानुवर्तकाश्च येन भगवांस्तेनोपसंक्रान्ताः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते तस्थुः। एकान्तस्थित उत्क्षेपको भिक्षुर्भगवन्तमिदमवोचत्। इह मम भदन्त रात्र्याः [प्रत्यूष]समये स्वसन्ततिं व्यवलोकयत एतदभवत्। पूर्ववत्संधिं कुर्यां सामग्रीमिति। तन्मया सर्व इमे भिक्षवः सामग्र्यामुद्योजिता इति। भगवानाह। साधु साधु भिक्षो बहुपुण्यं प्रसूयते अप्रमेयमसंख्येयमपरिमाणं यो भिक्षूणां कलहजातानां विहरतां भण्डनजातानां विगृहीतानां

1 Ms. स तेनोत्क्षेपको भिक्षुरुत्क्षिप्तकानुपरिवर्तकाभिक्षव उत्क्षिप्तकानुत्क्षिप्तकानुत्क्षेपको

विवादमापन्नानां पक्षापरपक्षव्यवस्थितानां संधिं करोति सामग्रीम्। यथा हि नाम कश्चिच्छतशच्छिन्नं बालं कोट्या कोट्या प्रतिसन्दध्यादेवमेव बहुपुण्यं प्रसूयते अप्रमेयमसंख्येयमपरिमाणं यो भिक्षूणां कलहजातानां विहरतां पूर्ववद्यावत्सन्धिं करोति सामग्रीम्। अपि तूत्क्षिप्तकस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयिष्यामि। उत्क्षिप्तकेन भिक्षुणा संघादोसारणा याचितव्या। एवं च पुनर्याचितव्या। शयनासनप्रज्ञप्तिं कृत्वा गण्डीमाकोट्य पृष्टवाचिकया भिक्षून्समनुयुज्य सर्वसंघे सन्निषण्णे सन्निपतिते यथावृद्धिकया सगौरवेण सामीचीं कृत्वा वृद्धान्ते उत्कुटुकेन निषद्याञ्जलिं प्रगृह्य इदं स्याद्वचनीयम्।

श्रृणोतु भदन्तः संघः। यन्निदानं ममोत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा अनापन्न इति वा उत्क्षिप्तक इति वा अनुत्क्षिप्तक इति वा सोऽहमापन्नो नानापन्नः उत्क्षिप्तो नानुत्क्षिप्तः। यत्पुनरुत्क्षिप्तो धर्मेण कर्मणा अकोप्येनास्थापनार्हेण। सोऽहमेवंनामा उत्क्षिप्तको भिक्षुः संघादोसारणां याचे। ओसारयतु मां भदन्तः संघः। यथाधर्मेण यथाविनयं प्रतिकरिष्ये। अनुकम्पयानुकम्पामुपादाय। एवं द्विरपि त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। यन्निदानमप्यायुष्मन्त उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा। अनापन्न इति वा। उत्क्षिप्तक इति वा। अनुत्क्षिप्तक इति वा। सोऽयमापन्नो नानापन्नः। उत्क्षिप्तको नानुत्क्षिप्तकः। यत्पुनरुत्क्षिप्तो धर्मेण कर्मणा-

कोप्येनास्थापनार्हेण। सोऽयमेवंनामा उत्क्षिप्तको भिक्षुः संघा-दोसारणं याचते। स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघ एवंनामानं भिक्षुमोसारयेदिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादः पूर्ववद्यावत्। सोऽयमेवंनामा भिक्षुः संघादो-सारणं याचते। तत्संघ एवंनामानं भिक्षुमोसारयति। येषा-मायुष्मतां क्षमेतानुजानीयात्संघो यत्संघ एवंनामानं भिक्षुमो-सारयेदिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

श्रृणोतु भदन्तः संघः। यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादः पूर्ववद् [यावत्]। सोऽयमेवंनामा[1] उत्क्षिप्तको[2] भिक्षुः संघादोसारणं याचते। तत्संघ एवंनामानं भिक्षुमोसारयति। येषामायुष्मतां क्षमन्ते एवंनामानमुत्क्षिप्तकं भिक्षु-मोसारयितुम्। ते तूष्णीम्। न क्षमन्ते। भाषन्ताम्। ओसारितः संघेन एवंनामा उत्क्षिप्तको भिक्षुः। क्षान्तमनुज्ञातं संघेन। यस्मात्तूष्णीमेवमेतद्धारयामि।

ओसारणीयं कर्म। तस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयामि। ओसारणीयकर्मकृतेन भिक्षुणा संघात्सामग्री याचयि-तव्या। एवं च पुनर्याचयितव्या।

1 Ms. नामानं

2 Ms. उत्क्षेपको

शृणोतु भदन्तः संघः। यन्निदानं ममोत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा अनापन्न इति वा। उत्क्षिप्त इति वा अनुत्क्षिप्त इति वा। सोऽहमापन्नो नानापन्नः। उत्क्षिप्तको नानुत्क्षिप्तकः। यत्पुनरुत्क्षिप्तो धर्मेण कर्मणा अकोप्येनास्थापनार्हेण। तेन मया एवंनाम्ना उत्क्षिप्तकेन भिक्षुणा संघादोसारणा याचिता। कृतं मम संघेनोसारणीयं कर्म। सोऽहमेवंनामा ओसारणीयकर्मकृतो भिक्षुसंघात्सामग्रीं याचे। ददातु भदन्तः संघो ममैवंनाम्न ओसारितस्य भिक्षोः संघसामग्रीम्। अनुकम्पयानुकम्पामुपादाय[1]। एवं द्विरपि। एवं त्रिरपि। ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति पूर्ववद् [यावत्]। स चेत् संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघ एवंनाम्नः ओसारणीयकर्मकृतस्य भिक्षोः सामग्रीं दद्यादिति। एषा ज्ञप्तिः। कर्म कर्तव्यम्।

शृणोतु भदन्तः संघः। यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्नः पूर्ववद्यावद्दत्ता संघेन एवंनाम्नः ओसारणीयकर्मकृतस्य भिक्षोः सामग्री। क्षान्तमनुज्ञातम्। यस्मात्तूष्णीमेवमेतद्धारयामि। इत्यस्य संघेन ओसारणीयकर्मकृतस्य भिक्षोः सामग्री दत्ता भवति। तस्य संघेन सामग्री दातव्या। नात्र कौकृत्यं करणीयम्।

1 See above, p. 192.

संघसामग्रीदत्तकस्याहं भिक्षोरासमुदाचारिकान् धर्मान् प्रज्ञपयामि । संघसामग्रीदत्तकेन भिक्षुणा पोषधो याचितव्यः । एवं च पुनर्याचितव्यः। शयनासनप्रज्ञप्तिं कृत्वा पूर्ववद्यावत् । सोऽहमेवंनामा संघसामग्रीदत्तकः संघात्सामग्रीपोषधं याचे । ददातु भदन्तः संघः ममैवंनाम्नः सामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधमनुकम्पामुपादाय । एवं द्विरपि । त्रिरपि । ततः पश्चादेकेन भिक्षुणा ज्ञप्तिं कृत्वा कर्म कर्तव्यम् ।

श्रृणोतु भदन्तः संघः । यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा पूर्ववद्यावत् । सोऽयमेवंनामा संघसामग्रीदत्तकः संघात्सामग्रीपोषधं याचते । स चेत्संघस्य प्राप्तकालं क्षमेतानुजानीयात्संघो यत्संघः एवंनाम्नः संघसामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधं दद्यादिति । एषा ज्ञप्तिः । कर्म कर्तव्यम् ।

श्रृणोतु भदन्तः संघः । यन्निदानमस्यायुष्मत उत्पन्नः कलहो भण्डनं विग्रहो विवादो यदुतापन्न इति वा अनापन्न इति वा पूर्ववद्यावत् । सोऽयमेवंनामा सामग्रीदत्तकः संघात्सामग्रीपोषधं याचते । तत्संघ एवं नाम्नः सामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधं ददाति । एषामायुष्मतां क्षमन्ते एवंनाम्नः सामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधं दातुम् । ते तूष्णीम् । न क्षमन्ते । भाषन्ताम् । दत्तः संघेन एवंनाम्नः संघसामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधः । क्षान्तमनुज्ञातं संघेन यस्मात्तूष्णीमेवमेतद्धारयामि ।

यस्य संघेन सामग्रीदत्तकस्य भिक्षोः सामग्रीपोषधो दत्तो भवति तेन सार्धं संघेनैकत्ये[1] निषद्य पोषधः कर्तव्यः प्रवारणा ज्ञप्तिः ज्ञप्तिद्वितीयं ज्ञप्तिचतुर्थं कर्म । नात्र कौकृत्यं करणीयम् । व्यग्राः कुर्वन्ति सातिसारा भवन्ति । न च पुनर्भिक्षुणा अपोषधे पोषधमागमयति । सातिसारो भवति । स्थापयित्वा मङ्गल्यपोषधं सामग्रीपोषधं वा ।

॥ कोशाम्बकवस्तु समाप्तम्[2] ॥

1 Cf. Pāli : एकच्चे ; *Mvyut.*, 245. 468.

2 219a, l. 1 : Tib. ends here a section thus : འདུལ་བ་གཞི་ཐམས་པོ་རེ་དགུ་པ ། See above, p. 170.

[कर्मवस्तुनि][1] उद्दानम् ।

काशिषु वासवग्रामकं सेनाञ्जयवस्तुकम् ।
चम्पायां भगवान् बुद्धः अकर्माणि प्रतिक्षिपेत् ॥

काशिषु वासवग्रामके सेनांजयो नाम भिक्षुः प्रतिवसति । तमागम्य वासवग्रामका ब्राह्मणगृहपतयो बुद्धधर्मसंघेषु कारान् कुर्वन्ति । ये आगन्तुका भिक्षवो वासवग्रामकमागच्छन्ति तानसौ प्रतिशाम्य सर्वोपकरणैः प्रवारयित्वा मार्गश्रमे प्रतिविनोदिते येषु कुलेषु पिण्डका उपनिबद्धास्तेषु भोक्तुं प्रेषयति । यावदन्यतमः सालोहितो वासवग्रामके वर्षा उषितः । त्रयाणां वार्षिकाणां मासानामत्ययात्कृतचीवरो निष्ठितचीवरः समादाय पात्रचीवरं येन श्रावस्ती तेन चारिकां प्रक्रान्तोऽनुपूर्वेण चारिकां चरन् श्रावस्तीमनुप्राप्तः ।

आचरितं षड्वर्गिकाणामशून्यं जेतवनद्वारमन्यतरान्यतरेण षड्वर्गिकेण । उपनन्दो जेतवनद्वारे तिष्ठति । तेनासौ दूरत एव दृष्टो बकाकारशिराः प्रलम्बभ्रूः[2] । स संलक्षयति । कोऽप्ययं स्थविरो भिक्षुरागच्छति । प्रत्युद्गन्तव्यमिति । स प्रत्युद्गतः । स्वागतं स्वागतं स्थविर इति । स कथयति । वन्दे आचार्य इति । स संलक्षयति । महल्लो बतायम् । नायमाचार्यं जानीते नाप्युपाध्यायमिति[2] । सालोहित कियद्दूरादागच्छसि । वासवग्रामकात् । किं तत्र । विहारः । किमसौ विहारः । आहो-

1 219a, l. 2 : ལས་ཀྱི་གཞི་འདི་རྫོགས་སོ །  2 See above, p. 99.

स्विद्विघातः। कीदृशो विहारः। कीदृशो विघातः। यत्रोपकरणसंपत् स विहारः। यत्रोपकरणवैकल्यं स विघातः। यद्येवं विहारोऽसौ यत्र सेनाञ्जयो नाम भिक्षुः प्रतिवसति। तमागम्य वासवग्रामीयका ब्राह्मणगृहपतयो बुद्धधर्मसंघेषु कारान् कुर्वन्ति। इतश्च तत्रागन्तुको भिक्षुरागच्छति। तमसौ प्रतिशाम्य सर्वोपकरणैः प्रवारयित्वा मार्गश्रमे प्रतिविनोदिते येषु कुलेषु भिक्षूणां पिण्डका उपनिबद्धास्तेषु भोक्तुं प्रेषयति।

आचरितं षड्वर्गिकाणां यत्किंचिदेव शृण्वन्ति तद्रात्रौ संनिपत्य परस्परमारोचयन्ति। नन्दोपनन्द कियच्चिरमस्माभिः कृच्छ्रमुद्वोढव्यम्। अस्ति किंचिद्युष्माकं किंचिच्छ्रुतं यतोदारावभासो भवेदिति। उपनन्दः कथयति। अस्ति। काशिषु वासवग्रामके सेनांजयो नाम भिक्षुः प्रतिवसति। तमागम्य वासवग्रामीयका ब्राह्मणगृहपतयः पूर्ववद्यावद्भोक्तुं प्रेषयति। यद्यभिप्रेतं तत्र गच्छामः। ते समादाय पात्रचीवरं येन वासवग्रामकस्तेन चारिकां प्रक्रान्ताः। अनुपूर्वेण चारिकां चरन्तो वासवग्रामकमनुप्राप्ताः। ते सेनांजयेन दूरत एव दृष्टाः। स संलक्षयति। आगता ह्येते दुष्ठुलसमुदाचाराः। प्रतिशामयित्वा सर्वोपकरणैः प्रवारयितव्याः। नो तु कुलानि भोक्तुं प्रेषयितव्या इति। ते अनेन प्रतिशामयित्वा सर्वोपकरणैः प्रवारिताः। नो तु कुलानि भोक्तुं प्रेषिताः। तेषामेके कथयन्ति। नन्दोपनन्द वयमनेन महल्लेन सर्वोपकरणैः प्रवारिताः। नो तु कुलानि भोक्तुं प्रेषिता इति। अपरे कथयन्ति। एकं तावत्संपन्नं कुलान्यपि प्रेषयिष्यतीति।

यावन्नवको भिक्षुरागतः। स तेन प्रतिशामयित्वा सर्वोपकरणैः प्रवारितो मार्गश्रमे प्रतिविनोदिते कुलानि भोक्तुं प्रेषितः। षड्वर्गिकाः प्रकुपिताः कथयन्ति। नन्दोपनन्द कीदृशोऽयं [महल्लः] छन्दद्वेषी[1]। यदि तावत्पूर्वमागतास्ते वयम्। [यदि वृद्धास्ते वयम्।[2]] अथ बहुश्रुतास्ते वयम्। एष भिक्षुरचिरेणाभ्यागतो नवकः प्रकृतिज्ञः। सोऽनेन सर्वोपकरणैः प्रवारयित्वा कुलानि भोक्तुं प्रेषितो नो तु वयम्। स तैरुपालब्धः। महल्ल ईदृशस्त्वं छन्दद्वेषी। यदि तावत्पूर्वमागतास्ते वयं पूर्ववद्यावत्। स त्वया सर्वोपकरणैः प्रवारयित्वा कुलानि भोक्तुं प्रेषितो नो तु[3] वयम्। स्थविरा मा किंचित् परिहीयते[4]। षड्वर्गिकाः संजातामर्षाः कथयन्ति। न तूष्णीं स्थातव्यम्। तदपरं प्रतिवदति[5]। स तैरभ्याहतः। तूष्णीमवस्थितः। तैस्तस्याचोदयित्वास्मारयित्वा वस्तुकर्मप्रतिज्ञाया बलादुत्क्षेपणीयं कर्म कृतम्। स संलक्षयति। दुःखं ब्राह्मणगृहपतयः प्रसाद्यन्ते[6] सुखमप्रसाद्यन्ते। यदि स्थास्यामि वासवग्रामीयका ब्राह्मण-गृहपतयः प्रसादं प्रवेदयिष्यन्ते। सर्वदा प्रक्रमितव्यमिति। स समादाय पात्रचीवरं येन श्रावस्ती तेन चारिकां प्रक्रान्तोऽनुपूर्वेण चारिकां

1 220b, l. 5: དགའ་བོ་ཉེ་དགའ་ཀུན་ཤུགས་འདི་ནི་འདུན་པ་དང་། ཞེ་སྡང་ཅི་འདྲ་བ་ལྡོས།

2 220b, l. 6: ཡང་ན་རྒན་པ་ཡིན་ན་ཡང་བདག་ཅག་ཡིན་ལ། 3 Ms. नाव

4 221a, l. 3: གནས་བརྟན་དག་ཅུང་ཟད་ཉམས་པར་མ་གྱུར་དམ།

5 Ms. प्रतिवससि ; 221a, l. 4: སྨྲར་སྨྲ།

6 221a, l. 6 : དད་པར་བྱ་བ།

चरन् श्रावस्तीमनुप्राप्तः। स भिक्षुभिर्दृष्ट उक्तश्च। स्वागतं स्वागतमायुष्मन्। सेनाञ्जयिन् प्रीता वयं त्वद्दर्शनेन नो त्वागमनेन। किं कारणम्। त्वामागम्य वासवग्रामीयका ब्राह्मणगृहपतयो बुद्धधर्मसंघेषु कारान् कुर्वन्ति। आगन्तुकानां गमिकानां च वासवग्रामकं प्रतिशरणम्। अस्त्येतदेवम्। मम तु षड्वर्गिकैरचोदयित्वास्मारयित्वा वस्तुकर्मप्रतिज्ञाया बलादुत्क्षेपणीयं कर्म कृतम्। किं कारणम्। तेन यथावृत्तमाख्यातम्। तेऽवध्यायन्तः क्षिपन्तो विवाचयन्त एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मात्तर्हि भिक्षवो व्यग्रेण न भिक्षुभिरचोदयित्वास्मारयित्वा वस्तुकर्मप्रतिज्ञया बलादुत्क्षेपणीयं कर्म कर्तव्यम्। कुर्वन्ति। सातिसारा भवन्ति।

बुद्धो भगवान् चम्पायां विहरति गर्गायाः पुष्करिण्यास्तीरे। तेन खलु समयेन षड्वर्गिका भिक्षव इमान्येवंरूपाण्यधर्मकर्माणि कुर्वन्ति। तद्यथा अधर्मेण कुर्वन्ति व्यग्राः। अधर्मेण कुर्वन्ति समग्राः। एतत्प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मान्न भिक्षुभिरिमान्येवंरूपाण्यधर्मकर्माणि करणीयानि। तद्यथा अधर्मेण व्यग्रैरधर्मेण समग्रैः धर्मेण व्यग्रैः। कुर्वन्ति। सातिसारा भवन्ति।

उद्दानम्।

**न एक एकेन [न] द्वौ न संबहुलाः कृताः।**
**न गणो गणस्य कर्माणि पंच संघकर्मणां स्वामिनः[1]॥**

1 222a, l. 5: གཉིས་མིན་ཏེ།

बुद्धो भगवान् चम्पायां विहरति गर्गायाः पुष्करिण्यास्तीरे। तेन खलु समयेन षड्वर्गिका भिक्षव इमान्येवंरूपाण्यधर्मकर्माणि कुर्वन्ति। तद्यथा एकोऽप्येकस्य। एको द्वयोः। एकः संबहुलानाम्। द्वावपि द्वयोः। द्वावेकस्य। द्वौ संबहुलानाम्। संबहुला अपि संबहुलानाम्। संबहुला एकस्य। संबहुला द्वयोः। गणो गणस्य। एतत् प्रकरणं भिक्षवो भगवत आरोचयन्ति। भगवानाह। तस्मात् नैकेनैकस्य कर्म कर्तव्यम्। नैकेन द्वयोः। नैकेन संबहुलानाम्। [न] द्वाभ्यां द्वयोः। न द्वाभ्यामेकस्य। न द्वाभ्यां संबहुलानाम्। न संबहुलैः संबहुलानाम्। न संबहुलैरेकस्य। न संबहुलैर्द्वयोः। न गणेन गणस्य। कुर्वन्ति। सातिसारा भवन्ति।

अपि तु भिक्षवः पंच संघकर्मणां स्वामिनः। कतमे पंच। चत्वारो भिक्षवः संघः। पंचापि भिक्षवः संघः। दश भिक्षवः [संघः]। विंशतिर्भिक्षवः संघः उत्तरे [च।] पंच संघाः।

तत्र भिक्षवो यत्र चत्वारो भिक्षवः प्रतिवसन्ति। अर्हति तत्र संघो धर्मेण सर्वकर्माणि कर्तुम्। स्थापयित्वा पंचानां प्रवारणां दशानामुपसंपदं विंशतीनां चावर्हणम्।

यत्र पंच प्रतिवसन्ति। अर्हति तत्र संघो धर्मेण सर्वकर्माणि कर्तुम्। स्थापयित्वा दशानामुपसंपदं विंशतीनां चावर्हणम्।

यत्र भिक्षवो दश प्रतिवसन्ति। अर्हति तत्र संघः सर्वकर्माणि कर्तुम्। स्थापयित्वा विंशतीनामावर्हणम्।

यत्र विंशतिर्भिक्षवः प्रतिवसन्ति उत्तरे च। अर्हति तत्र संघो धर्मेण सर्वकर्माणि कर्तुम्।

उद्दानम् ।

चतुर्वर्गकरणीयं पुद्गल ऊनकः कृतः[1] ।
न पारिवासिकचतुर्थेन कर्मचतुष्टयं स्मृतम् ॥

चतुर्वर्गकरणीयं भिक्षवः कर्म ऊनाश्चत्वारः कुर्वन्ति । अधर्मकर्म च तदविनयकर्म च । न तत्तथा करणीयम्। संघश्च तेन सातिसारः । चतुर्वर्गकरणीयं कर्म आगारिकचतुर्थाः कुर्वन्ति । अधर्मकर्म च तदविनयकर्म च । न च तत्तथा करणीयम् । संघश्च तेन सातिसारः । एवं श्रामणेरकः षण्ढपंडकः भिक्षुणीदूषको मातृघातकः पितृघातकः अर्हद्घातकः संघभेदकः तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादकस्तीर्थ्यकस्तीर्थिकावक्रान्तिकः स्तेयासंवासिको[2] नानासंवासिकोऽसंवासिकः पारिवासिकचतुर्थाः कर्म कुर्वन्ति। अधर्मकर्म च तदविनयकर्म च। [न च]तत्तथा करणीयम्। संघश्च तेन सातिसारः ।

चतुर्वर्गकरणीयं कर्म पूर्णाश्चत्वारो धर्मेण कुर्वन्ति धर्मकर्म च तद्विनयकर्म च । एवं च तत्करणीयम् । संघश्च तेन [न] सातिसारः। चतुर्वर्गकरणीयं कर्म नागारिकचतुर्थो न श्रामणेरकः पूर्ववद्यावन्न पारिवासिकचतुर्थाः कुर्वन्ति । धर्मकर्म च तद्विनयकर्म च । एवं च तत्करणीयम् । संघश्च तेन [न][3]सातिसारः ।

पंचवर्गकरणीयं कर्म ऊनाः पंच कुर्वन्ति। अधर्मकर्म च तद-

1 223a, l. 3: གཞི་ཡོ་ཆོ་གས་ཀྱི་རྒྱུ་བ་ལ །
གང་ཟག་སོ་སོས་བྱེད་པ་དང །
སྤྲོབས་པ་དག་དང་བའི་ཡིས་ནི །
ལས་བཞི་རྣམ་ པ་གཅས་དྲན་བྱ །

2 See Mvyut. 252. 1. 3 223b, l. 3: མི་འགྱུར །

विनयकर्म च । न तथा करणीयम् । संघश्च तेन सातिसारः । पंचवर्गकरणीयं कर्म आगारिकपंचमः पूर्ववद्यावत् पारिवासिकपंचमाः कुर्वन्ति । अधर्मकर्म च तद्विनयकर्म च । न च तत्तथा करणीयम् । संघश्च तेन सातिसारः ।

पंचवर्गकरणीयं कर्म पूर्णाः पंचवर्गेण कुर्वन्ति । धर्मकर्म च तद्विनयकर्म च । एवं तत्करणीयम् । संघश्च तेन [न]सातिसारः । पञ्चवर्गकरणीयं कर्म नागारिकपञ्चमा न श्रामणेरकाः पूर्ववद्यावन्न पारिवासिकपञ्चमा धर्मेण कुर्वन्ति । धमकर्म च तद्विनयकर्म । एवं च तत्करणीयम् । संघश्च तेन[न] सातिसारः ।

दशवर्गकरणीयं कर्म ऊना दशवर्गेण कुर्वन्ति । अधर्मकर्म च तद्विनयकर्म च । न च तत्तथा करणीयम् । संघश्च तेन सातिसारः । दशवर्गकरणीयं कर्म आगारिकदशमाः पूर्ववद्यावत् पारिवासिकदशमा कुर्वन्ति । अधर्मकर्म च तद्विनयकर्म च । न च तत्तथा करणीयम् । संघश्च तेन सातिसारः ।

दशवर्गकरणीयं कर्म पूर्णा दशवर्गेण कुर्वन्ति । धर्मकर्म च तद्विनयकर्म च । एवं च तत्कर्म करणीयम् । संघश्च तेन[न] सातिसारः । दशवर्गकरणीयं कर्म नागारिकदशमाः पूर्ववद्यावन्न पारिवासिकदशमा धर्मेण कुर्वन्ति । धर्मकर्म च तद्विनयकर्म च । एवं च करणीयम् । संघश्च तेन[न] सातिसारः ।

विंशतिवर्गकरणीयं कर्म ऊना विंशतिवर्गेण कुर्वन्ति। अधर्मकर्म च तद्विनयकर्म च । संघश्च तेन सातिसारः । विंशतिवर्ग-

करणीयं कर्म आगारिकविंशतिमाः श्रामणेरकाः पूर्ववत्पारिवासिकविंशतिमाः कुर्वन्ति। अधर्मकर्म च तद्विनयकर्म च। न च तत्तथा करणीयम्। संघश्च तेन सातिसारः।

विंशतिवर्गकरणीयं कर्म पूर्णा विंशतिर्धर्मेण कुर्वन्ति। धर्मकर्म च तद्विनयकर्म च। एवं च तत्करणीयम्। संघश्च तेन [न] सातिसारः। विंशतिवर्गकरणीयं कर्म नागारिकविंशतिमा न श्रामणेरकाः पूर्ववद्यावन्न पारिवासिकविंशतिमा धर्मेण कुर्वन्ति। धर्मकर्म तद्विनयकर्म च। एवं च तत्करणीयम्। संघश्च तेन [न]सातिसारः।

उद्दानम्।

धर्माधर्मेण यत्कर्म यच्च ज्ञप्तितया कृतम्।
संमुखं च प्रतिज्ञा च चक्रपेयाल सङ्कलात्॥[1]

अधर्मकर्म। धर्मकर्म। अधर्म[कर्म] कतमत्। अप्राप्ते उत्सारणे अप्राप्तमुत्सारयन्ति[2]। यथास्योत्सार्यमाणस्यानुश्रावणं भवति। न तथोत्सारयन्ति। अधर्मकर्म। धर्मकर्म कतमत्। प्राप्ते उत्सारणे प्राप्तमुत्सारयन्ति। यथास्योत्सार्यमाणस्यानुश्रावणं भवति। तथोत्सारयन्ति। धर्मकर्म। अप्राप्ते ओसारणे अप्राप्तमोसारयन्ति। यथास्य ओसार्यमाणस्यानुश्रावणं भवति। न तथा ओसारयन्ति। अधर्मकर्म। प्राप्ते ओसारणे प्राप्तमोसारयन्ति। यथास्य ओसार्यमाणस्यानुश्रावणं भवति। तथोसारयन्ति[3]। धर्मकर्म। ज्ञप्तिकर्म ज्ञप्तिमकृत्वा कुर्वन्ति। अधर्मकर्म। ज्ञप्तिकर्म ज्ञप्तिं कृत्वा कुर्वन्ति।

1 225a, 1, 3-4 : འཁོར་ལོ་ལྟ་བུར་བསྒྲེ་བས་འབྲེལ།

2 225a, 1, 5 : མི་འོས་པ་ལས་བསླང་བ་པ་མ་ཕྱུག་པར་སྐྱོང་ ཞིང་།

3 Ms. तथानुश्रावयन्ति

धर्मकर्म। ज्ञप्तिद्वितीयं कर्म। ज्ञप्तिमकृत्वा एकं वारमनुश्रावयन्ति। अधर्मकर्म। ज्ञप्तिद्वितीयं कर्म। ज्ञप्तिं कृत्वा एकं वारमनुश्रावयन्ति। धर्मकर्म। ज्ञप्तिचतुर्थं कर्म। ज्ञप्तिमकृत्वा त्रीन् वाराननुश्रावयन्ति। अधर्मकर्म। ज्ञप्तिचतुर्थं कर्म। ज्ञप्तिं कृत्वा त्रीन् वाराननुश्रावयन्ति। धर्मकर्म। अन्येन कर्मणा ज्ञप्तिं कृत्वा निष्ठापयन्ति। अधर्मकर्म। तेनैव कर्मणा ज्ञप्तिं कृत्वा निष्ठापयन्ति। धर्मकर्म। संमुखकरणीयं कर्मासंमुखीभूतस्य कुर्वन्ति। अधर्मकर्म। संमुखकरणीयं कर्म संमुखीभूतस्य कुर्वन्ति। धर्मकर्म। [प्रतिज्ञाकरणीयं कर्म अप्रतिज्ञया कुर्वन्ति। अधर्मकर्म।] प्रतिज्ञाकरणीयं कर्म प्रतिज्ञया कुर्वन्ति। धर्मकर्म। संमुखविनयार्हाय स्मृतिविनयं ददाति। अधर्मकर्म। अमूढविनयं तत्स्वभावैषीयं यद्भूयैषीयं प्रतिज्ञाकारकं तृणप्रस्तारकं तर्जनीयं निगर्हणीयं प्रतिसंहरणीयमदर्शनीयोत्क्षेपणयमप्रतिकर्मार्हयोत्क्षेपणीयमप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म। परिवासं मूलपरिवासं मूलापकर्षपरिवासं मानाप्यं मूलमानाप्यं मूलापकर्षमानाप्यमावर्हन्ति[1]। अधर्मकर्म। संमुखविनयार्हाय तु संमुखविनयमेव ददाति न स्मृतिविनयं न यावदावर्हन्ति। धर्मकर्म। स्मृतिविनयार्हाय अमूढविनयं ददाति। अधर्मकर्म। एवं यद्भूयैषीयं पूर्ववद्यावदावर्हन्ति संमुखविनयं ददाति। अधर्मकर्म। स्मृतिविनयार्हाय तु स्मृतिविनयमेव ददाति न तत्स्वभावैषीयं न यावत्संमुखविनयम्। धर्मकर्म। अमूढ-

1 Ms. आवर्ष्यन्ति

विनयार्हाय तत्स्वभावैषीयं ददाति। अधर्मकर्म। एवं यद्भूयैषीयं यावत्संमुखविनयं स्मृतिविनयं ददाति। अधर्मकर्म। अमूढविनयार्हाय त्वमूढविनयमेव ददाति तत्स्वभावैषीयं न यावत्संमुखविनयं स्मृतिविनयं। धर्मकर्म। तत्स्वभावैषीयार्हाय यद्भूयैषीयं ददाति। अधर्मकर्म। तर्जनीयार्हाय पूर्ववद्यावत् अमूढविनयं ददाति। अधर्मकर्म। तत्स्वभावैषीयार्हाय तु तत्स्वभावैषीयमेव ददाति न यद्भूयैषीयं न यावदमूढविनयम्। धर्मकर्म। यद्भूयैषीयार्हाय तर्जनीयं कर्म कुर्वन्ति। अधर्मकर्म। निगर्हणीयार्हाय पूर्ववद्यावत्तत्स्वभावैषीयं ददाति। अधर्मकर्म। यद्भूयैषीयार्हाय यद्भूयैषीयमेव ददाति न तर्जनीयं न यावत्तत्स्वभावैषीयम्। धर्मकर्म। तर्जनीयकर्मार्हाय निगर्हणीयं कर्म कुर्वन्ति प्रतिसंहरणीयं पूर्ववद्यावद्यद्भूयैषीयं ददाति। अधर्मकर्म। तर्जनीयकर्मार्हाय तु तर्जनीयमेव कर्म कुर्वन्ति न परिशिष्टानीति। अनया वर्तन्या चक्रपेयालः पूर्ववद्यावद्धर्मकर्म। निगर्हणीयार्हाय प्रतिसंहरणीयं कर्म कुर्वन्ति। अधर्मकर्म। पूर्ववत्। निगर्हणीयकर्मार्हाय तु निगर्हणीयकर्मैव कुर्वन्ति। धर्मकर्म-पूर्ववत्। प्रवासनीयकर्मार्हाय प्रतिसंहरणीयं कर्म कुर्वन्ति। अधर्मकर्म पूर्ववत्। प्रवासनीयकर्मार्हाय तु प्रवासनीयमेव कर्म कुर्वन्ति। धर्मकर्म पूर्ववत्। प्रतिसंहरणीयकर्मार्हायादर्शनीयोत्क्षेपणीयं कर्म कुर्वन्ति। अधर्मकर्म पूर्ववत्। प्रतिसंहरणीयकर्मार्हाय तु प्रतिसंहरणीयमेव कर्म कुर्वन्ति। धर्मकर्म पूर्ववत्। अदर्शनीयोत्क्षेपणीयकर्मार्हायाप्रतिकर्मार्हायोत्क्षेपणीयं कर्म कुर्वन्ति। अधर्मकर्म पूर्ववत्। अदर्शनीयोत्क्षेपणीयकर्मार्हाय त्वदर्शनीयोत्क्षेपणीयमेव कर्म कुर्वन्ति।

धर्मकर्म । पूर्ववत् । अप्रतिकर्मार्हायोत्क्षेपणीयकर्मार्हाय परिवासं ददाति । अधर्मकर्म पूर्ववत् । अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्म कुर्वन्ति । अधर्मकर्म पूर्ववत् । अप्रतिकर्मार्हायोत्क्षेपणीयकर्मार्हाय त्वप्रतिकर्मार्हायोत्क्षेपणीयमेव कर्म कुर्वन्ति । धर्मकर्म पूर्ववत् । अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मार्हाय परिवासं ददाति । अधर्मकर्म पूर्ववत् । अप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयकर्मार्हाय त्वप्रतिनिसृष्टे पापके दृष्टिगते उत्क्षेपणीयं कर्मैव कुर्वन्ति । धर्मकर्म पूर्ववत् । परिवासकर्मार्हाय मूलपरिवासं ददाति । अधर्मकर्म पूर्ववत् । परिवासकर्मार्हाय त्वपरिवासमेव तु ददाति । अधर्मकर्म पूर्ववत् । मूलपरिवासार्हाय मूलापकर्षपरिवासं ददाति । अधर्मकर्म पूर्ववत् । मूलपरिवासार्हाय तु मूलपरिवासमेव ददाति । धर्मकर्म पूर्ववत् । अपर्युषितपरिवासाय मानाप्यं ददाति । अधर्मकर्म पूर्ववत् । अपर्युषितपरिवासाय मानाप्यं ददाति । अधर्मकर्म पूर्ववत् । पर्युषितपरिवासाय तु मानाप्यं ददाति । धर्मकर्म पूर्ववत् । अचरितमानाप्यमावर्हन्ति । अधर्मकर्म पूर्ववत् । चरितमानाप्यमावर्हन्ति । धर्मकर्म पूर्ववत् । आवर्हणार्हाय संमुखविनयं ददाति । पूर्ववद्यावन्मानाप्यं ददाति । अधर्मकर्म पूर्ववत् । आवर्हणार्हाय त्वावर्हणमेव कुर्वन्ति न संमुखविनयं ददाति न यावन्मानाप्यम् । धर्मकर्म पूर्ववत् । एवमेव नवकेन चक्रपेयालं विस्तरेण बोद्धव्यम् ।

उद्दानम् ।

**व्यग्राः समग्रा रोहन्ति धर्माधर्मेण वोत्क्षिपेत् ।**
**ओसारणया एतानि कर्म वस्तुसमुद्दितम् ॥**

व्यग्रकर्म । समग्रकर्म । व्यग्रकर्म कतमत् । यावन्तो भिक्षवः सीमाप्राप्ताः क्रियाप्राप्तास्ते सर्वे समवहिताः संमुखीभूताश्छन्दार्हेभ्यश्च च्छन्देनानीता भवन्ति । समवहिताश्च भिक्षवः संमुखीभूताः प्रतिवहन्ति प्रतिक्रोशन्ति । येषां प्रतिवहतां प्रतिक्रोशतां प्रतिक्रोशो रोहति । कर्माणि च कुर्वन्ति । इदमुच्यते व्यग्रकर्म । समग्रकर्म कतमत् । यावन्तो भिक्षवः सीमाप्राप्ताः क्रियाप्राप्तास्ते सर्वे समवहिताः संमुखीभूताश्छन्दार्हेभ्यश्च च्छन्देनानीता भवन्ति । समवहिताश्च भिक्षवः संमुखीभूता न प्रतिवहन्ति न प्रतिक्रोशन्ति । येषां प्रतिवहतां प्रतिक्रोशतां प्रतिक्रोशो रोहति । कर्माणि च कुर्वन्ति । इदमुच्यते समग्रकर्म ।

आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति । कतीनां भदन्त प्रतिकोशो न रोहति । दशानामुदालिन् । अलज्जिनः सान्तरस्य बालस्य मूढस्याव्यक्तस्याकुशलस्य[1] बहिःसीमायां स्थितस्य ईर्यापथे च्युतस्य वाचा असंवृतस्य । कतीनां भदन्त प्रतिकोशो रोहति । चतुर्णामुदालिन् । प्रकृतिस्थितस्य अन्तःसीमायां स्थितस्य ईर्यापथादच्युतस्य वा वाचा संयतस्येति । आयुष्मानुदाली बुद्धं भगवन्तं पृच्छति । कति भदन्त उत्क्षेपणीयकर्माणि । चत्वार्युदालिन् । अधर्मेणोत्क्षिपन्ति व्यग्रा अधर्मेण समग्राः । धर्मेण व्यग्राः । [धर्मेण समग्राः] । तत्रैकमुत्क्षेपणकर्म । यदिदं धर्मेणोत्क्षिपन्ति समग्राः । कति भदन्त ओसारणकर्माणि । चत्वा-

1 Ms. ०व्यक्तयस्या०

युदालिन् । अधर्मेणोसारयन्ति व्यग्राः । अधर्मेण समग्राः । धर्मेण व्यग्राः । धर्मेण समग्राः । तत्रैकमोसारणकर्म । यदिदं धर्मेण कुर्वन्ति समग्राः ।

॥ कर्मवस्तु समाप्तम् ॥

# INDEX

# CORRECTIONS

| | | | | | |
|---|---|---|---|---|---|
| Page | 1 | for | त्त्म | read | त्तेमं |
| ,, | 5 | ,, | वशालीं | ,, | वैशालीं |
| ,, | 6 | ,, | अधमा | ,, | अधमाः |
| ,, | 14 | ,, | ग्रहिष्यामोति | ,, | ग्रहीष्यामीति |
| ,, | 15 | ,, | आम्रवनम् | ,, | आम्रवणम् |
| ,, | 18 | ,, | यद्येकस्सिन् | ,, | यद्येकस्मिन् |
| ,, | 19 | ,, | लिखत्विति | ,, | लिखन्त्विति |
| ,, | 27 | ,, | व्यपदेशं | ,, | व्युपदेशं |
| ,, | 27 | ,, | व्यपदिशामि | ,, | व्युपदिशामि |
| ,, | 29 | ,, | भैषज्यमेतन्ता० | ,, | भैषज्यमेतत्ता० |
| ,, | 30 | ,, | इदृशो | ,, | ईदृशो |
| ,, | 31 | ,, | स्यस्थीभूतः | ,, | स्वस्थीभूतः |
| ,, | 32 | ,, | प्रदीपेणेव | ,, | प्रदीपेनेव |
| ,, | 37 | ,, | नीलैर्वस्रै० | ,, | नीलैर्वस्त्रै० |
| ,, | 39 | ,, | द्रव्यानि दत्ताणि | ,, | द्रव्याणि दत्तानि |
| ,, | 39 | ,, | विस्मयमापन्न | ,, | विस्मयमापन्नः |
| ,, | 40 | ,, | दृष्टा | ,, | दृष्ट्वा |
| ,, | 42 | ,, | कृत्त्वा | ,, | कृत्वा |
| ,, | 46 | ,, | शल्पा | ,, | शल्या |
| ,, | 47 | ,, | मगडानुपूर्वीं | ,, | मगडानुपूर्वी' |
| ,, | 47 | ,, | तथाकृतम् | ,, | तथा कृतम् |
| ,, | 48 | ,, | सान्तरोन्तर० | ,, | सान्तरोत्तर |
| ,, | 50, 51, 52 | ,, | छित्वा | ,, | छित्त्वा |
| ,, | 52, 53 | ,, | दत्वा | ,, | दत्त्वा |
| ,, | 54 | ,, | प्रादुर्भुतम् | ,, | प्रादुर्भूतम् |
| ,, | 55 | ,, | गगछसोति | ,, | गच्छसीति |
| ,, | 56 | delete | तु | | |
| ,, | 64, 65 | ,, | विचारयथ | ,, | विचारयत |

| | | | | | |
|---|---|---|---|---|---|
| Page | 70 | for | ब्रह्मत्तो | read | ब्रह्मदत्तो |
| ,, | 72 | ,, | संप्रस्थित | ,, | संप्रस्थितः |
| ,, | 72 | ,, | वन्दिग्रहकरप्रात्यायांश्च | ,, | वन्दिग्राहकरप्रत्यायांश्च |
| ,, | 75 | ,, | एवं रूपे | ,, | एवंरूपे |
| ,, | 82 | ,, | समान्यधिष्ठायोक्तोः | ,, | समान्यधिष्ठायोक्तः |
| ,, | 84 | ,, | यूथपरिभृष्टो | ,, | यूथपरिभ्रष्टो |
| ,, | 85 | ,, | विहरिष्पति | ,, | विहरिष्यति |
| ,, | 85 | ,, | प्रेष्पदारिक | ,, | प्रेष्यदारिका |
| ,, | 86 | ,, | व्याकृताः | ,, | व्याकृतः |
| ,, | 87 | ,, | निरूपधिशेषे | ,, | निरुपधिशेषे |
| ,, | 88 | ,, | निष्यद्य | ,, | निषद्य |
| ,, | 88 | ,, | पुरयाणि | ,, | पुरयानि |
| ,, | 88 | ,, | परिभुञ्जन्ते | ,, | परिभुञ्जते |
| ,, | 89 | ,, | पुनरायष्म० | ,, | पुनरायुष्म० |
| ,, | 90 | ,, | व्राह्मण | ,, | ब्राह्मण |
| ,, | 90 | ,, | पञ्चमिः | ,, | पञ्चभिः |
| ,, | 91 | ,, | प्रज्ञापयिष्यामि | ,, | प्रज्ञपयिष्यामि |
| ,, | 93 | ,, | समानाह्यीक्य० | ,, | समाना अह्रीक्य० |
| ,, | 93 | ,, | पवासौ | ,, | एवासौ |
| ,, | 95 | ,, | उद्वानम् | ,, | उद्दानम् |
| ,, | 95, 96 | delete visargas of मोहपुरुषः | | | |
| ,, | 96 | ,, | उपगन्तव्यम् | ,, | उपगन्तव्या |
| ,, | 97 | ,, | भाजयिष्पामः | ,, | भाजयिष्यामः |
| ,, | 99 | ,, | कोऽप्पयं | ,, | कोऽप्ययं |
| ,, | 99 | ,, | कृश्छेरण० | ,, | कृच्छ्रेण० |
| ,, | 102 | ,, | सन्निपतन्ति | ,, | सन्निपतति |
| ,, | 102 | ,, | भिक्षुना | ,, | भिक्षुणा |
| ,, | 103 | ,, | स्थलस्था | ,, | स्थलस्थाः |
| ,, | 103 | ,, | चिन्तापरस्तिष्ठतः | ,, | चिन्तापरौ तिष्ठतः |

| | | | | |
|---|---|---|---|---|
| Page 103 | for | भीरूको | read | भीरुको |
| ,, 104 | ,, | सकाशसुपसंक्रम्य | ,, | सकाशमुपसंक्रम्य |
| ,, 104 | ,, | मातुलोऽहं | ,, | मातुल अहं |
| ,, 104 | ,, | प्रधातयसि | ,, | प्रघातयसि |
| ,, 106 | ,, | भोजिताम् | ,, | भोजितम् |
| ,, 108 | ,, | उद्वानम् | ,, | उद्दानम् |
| ,, 108 | ,, | यद्भयोपि | ,, | यद्भूयोऽपि |
| ,, 109 | ,, | एकपोषधात्वदय० | ,, | एकपोषधत्वादय० |
| ,, 109 | ,, | इदमेवं रूपं | ,, | इदमेवंरूपं |
| ,, 113 | ,, | उसारयन्ति | ,, | उत्सारयन्ति |
| ,, 143 | ,, | बद्धस्य | ,, | बुद्धस्य |
| ,, 145 | ,, | पृष्ठवाच्चिकया | ,. | पृष्टवाच्चिकया |
| ,, 158 | ,, | चरन्तश्चीरै० | ,, | चरन्तश्चोरै० |
| ,, 160 | ,, | त्रिचोवरम् | ,, | त्रिचीररम् |